कूर्परे मणिबन्धे च हृदये नाभिपार्श्वके ।
पृष्ठे चैव प्रतिष्ठाय जपेत्तत्राधिदैवतम् ।। २९ ।।

शिवं शक्तिं च नादाख्यं ईशं नादान्तमेव च ।
वामादिनवशक्तीश्च एताः षोडशदेवताः[1] ।। ३० ।।

नासत्यो दस्रकश्चैवमश्विनौ द्वौ समीरितौ ।
अथवा मूर्ध्नि केशे च कर्णे च श्वसने तथा ।। ३१ ।।

बाहुद्वये च हृदये नाभ्यामूर्वोर्युगे तथा ।
जानुद्वये च पदयोः पृष्ठभागे च षोडश ।। ३२ ।।

शिवश्चन्द्रश्च रुद्रार्कौ विघ्नेशो विष्णुरेव च ।
श्रीश्चैव हृदयेशश्च तथा नाभौ प्रजापतिः ।। ३३ ।।

नागाश्च नागकन्याश्च उभयोः ऋषिकन्यकाः ।
पादयोश्च समुद्राश्च तीर्थाः पृष्ठेऽपि शास्त्रतः ।। ३४ ।।

एवं च षोडशं ध्यायेदष्टस्थानमथोच्यते ।
गुरुस्थानं ललाटं च कर्णद्वयमनुत्तमम् ।। ३५ ।।

अंसयुग्मं च हृदयं नाभिरित्यष्टमं भवेत् ।
ब्रह्मा च ऋषयः सप्त देवताश्च प्रकीर्तिताः ।। ३६ ।।

अथवा मस्तकं बाहू हृदयं नाभिरेव च ।
पञ्च स्थानान्यमून्याहुर्भस्मतत्त्वविदो जनाः ।। ३७ ।।

---

1. अत्र षोडदेवतानामग्रहणे न्यूनता वर्तते । नादान्तानुसारिदेवताद्वयमपि योजनीयमिति भाति ।।

यथासम्भावनं कुर्याद्देशकालाद्यपेक्षया ।
उद्धूलनेऽप्यशक्तश्चेत्त्रिपुण्ड्रादीनि कारयेत् ।। ३८ ।।

त्रिणेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुम् ।
स्मरन्नमः शिवायेति ललाटे तु त्रिपुण्ड्रकम् ।। ३९ ।।

ईशाभ्यां नम इत्युक्त्वा पार्श्वयोश्च त्रिपुण्ड्रकम् ।
बीजाभ्यां नम इत्युक्त्वा धारयेत्तु प्रकोष्ठयोः ।। ४० ।।

कूर्पराधः पितृभ्यां च उमेशाभ्यां तथोपरि ।
श्रीमायेति ततः पृष्ठे शिरसः पश्चिमे तथा ।। ४१ ।।

नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः ।
पापं नाशयते कृत्स्नमपि जन्मशतार्जितम् ।। ४२ ।।

कर्णोपरि कृतं पापं नष्टं स्याद्भस्मधारणात् ।
कण्ठे च धारणात्कण्ठभागादिकृतपातकम् ।। ४३ ।।

बाह्वोर्बाहुकृतं पापं पृष्ठे गुह्यकृतं तथा ।
पार्श्वयोर्धारणात्पापं परस्त्र्यालिङ्गनादिकम् ।। ४४ ।।

तद्भस्मधारणं मुख्यं सर्वत्रैव त्रिपुण्ड्रकम् ।
ब्रह्मविष्णुमहेशात्मत्रयाग्नीनां च धारणम् ।। ४५ ।।

गुणलोकत्रयाणां च धारणं तेन वै कृतम् ।
तेनाधीतं च सकलं तेन सर्वमनुष्ठितम् ।। ४६ ।।

येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् ।
त्यक्तवर्णाश्रमाचारो लुप्तवर्णक्रियोऽपि यः ।। ४७ ।।

सुवर्णस्तेयकृत्पुण्ड्रधारणात्सोऽपि मुच्यते ।
ये भस्मधारणं मुक्त्वा कर्म कुर्वन्ति मानवाः ।। ४८ ।।

तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः ।
महापातकयुक्तानां पूर्वजन्मसु सर्वतः ।। ४९ ।।

त्रिपुण्ड्रोद्धूलने द्वेषो जायते सुदृढं मुने ।
येषां द्वेषो भवेद्ब्रह्मन् ललाटे भस्मदर्शनात् ।। ५० ।।

तेषामुत्पत्तिसाङ्कर्यमनुमेयं विपश्चिता ।
ये भस्मधारणं दृष्ट्वा नराः कुर्वन्ति ताडनम् ।। ५१ ।।

तेषां चण्डालतो जन्म ब्रह्मभूयं विपश्चिता ।
येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा ।। ५२ ।।

गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः ।
त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते ।। ५३ ।।

धारयन्ति च ये भक्त्या धारयन्ति तमेव ते ।
धिग् भस्मरहितं फालं धिग् ग्राममशिवालयम् ।। ५४ ।।

धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् ।
रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ।। ५५ ।।

तस्मात्सर्वेषु लोकेषु वीर्यवान् भस्मसंयुतः ।
भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसङ्गमात् ।। ५६ ।।

भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।
भस्मसन्दिग्धसर्वाङ्गो भस्मदिव्यत्रिपुण्ड्रकः ।। ५७ ।।

भस्मशायी च पुरुषो भस्मनिष्ठ इति स्मृतः ।। ५८ ।।

**स्कन्दः (उवाच)**

अष्टस्थानधृतं त्रिपुण्ड्रमलिके स्यादष्टमूर्तिप्रियं
तद्वै द्वादशरुद्रदैवतमुमे तद्द्वादशाङ्गैर्धृतम् ।
मन्ये षोडशशीतलाङ्गकलया धार्यं त्रिपुण्ड्रं तनौ
द्वात्रिंशस्थित वर्ष्मणि त्रिभुवनाधीशास्पदं प्राप्नुयात् ।। ५९

धृतं ललाटेऽक्षि दधाति फाले
पाणावथैणं शिरसीन्दुगङ्गाम् ।
वक्षस्सुचक्षुःश्रवसोरुहारं
हारोभवेत् भूतिविभूतिभानैः ।। ६० ।।

यो वह्निसप्तकमनुप्रथितोरु भस्म-
भूषस्त्रयायुषमनुप्रथितोरुपुण्ड्रः ।
फालैणवाहसख एणकृताङ्कमौलि-
रेणीदृशार्धतनुरेणकरो भवेत् सः ।। ६१ ।।

विरजानलजां समिद्भवां वा
सितवर्णां किल धारयेद्विभूतिम् ।
स्मृतिजातानलभस्मधार्यमाहु-
र्गृहिणां वै नियमेन सर्वथापि ।। ६२ ।।

वनदावोत्थभवं वनेचरो
यतयः सर्वगतं सितं सदा ।
अतिवर्णाश्रमधर्मतत्परः
पितृकान्तारगतं विलेपयेत् ।। ६३ ।।

विप्राणां पचनाग्निसम्भवमुमे धार्यं त्रिपुण्ड्रात्मना
भस्मैवाघहरं भवेत् हितकृत्पादोद्भवानां सदा
सङ्कीर्णेष्वपि रथ्यपथ्यविहितं भस्मैव तत्पावनम् ।। ६४ ।

धन्यानामिदमेव मङ्गलकरं सत्फाललिप्तं मुने ।। ६५ ।।

भस्मत्रिपुण्ड्रपरिमण्डिततुण्डगण्ड
श्रीबाहुदण्डयुगलांस बृहत्पिचण्डः ।
चण्डांशुसूनुनिलयं न स जातु पश्येत्
इन्दुप्रभासरसमौलिकटाक्षषण्डैः ।। ६६ ।।

भवेत्स विभवाधिकः प्रतिभवेऽपि भावादरो
भवोद्भवसमर्चनप्रभवितात्मभावः सदा ।
भजेत भसितं सितं यदि तदा तनुं सन्त्यजन्
भवेत्किल हि ना नरः (यमादृतः) परमकातरः पामरः ।।

शिवे भसित भूषणो भवति भाग्यपूर्णो नरो
वरश्रुतिपरायणोऽप्यहह भस्मपुण्ड्रोज्झितः ।
द्विजाधमकुलानल प्रबलधूमकेतुर्भवे-
त्कदापि नरकालयान्न हि स जातु मुच्येत च ।। ६८

धृतसितभसितत्रिपुण्ड्रभूषा
यतिमतिगतिदायिनःस्तुतेशाः ।
कृतवरसुकृतोज्झितारिवर्गा-
मितहिततपसा भवन्ति हाराः ।। ६९ ।।

नाम्ना न शौचाचमनक्रियाभिः
शुध्येत विद्यापि कृता कृताभिः ।

भस्मत्रिपुण्ड्रोज्झितफालगात्रः
पात्रं स नामुष्मिकपुण्यहेतौ ।। ७० ।।

वीतैषणस्त्रिषवणं किल भस्मभूषो
योषाविरुद्धहृदयःकिल भक्तवर्यः ।
शाक्तः स मुक्तिपदवीमभिवीक्षितुं वै
त्र्यक्षप्रसादमखिलं स तदा लभेत ।। ७१ ।।

।। इति श्रीशिवरहस्ये दशमांशे षष्ठोऽध्यायः ।।



## ।। सप्तमोऽध्यायः ।।

**स्कन्द उवाच -**

मानस्तोकेति मन्त्रेण मन्त्रितं भस्म धारयेत् ।
ऊर्ध्व पुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च ।। १।।

अधः पुण्ड्रमृचः साक्षात्तस्मात्पुण्ड्रं त्रियायुषम् ।
त्रियायुषाणि कुर्वीत ललाटे भुजयोर्द्वयोः ।। २।।

नाभौ शिरसि हृत्पार्श्वे ब्राह्मणाः क्षत्रियास्तथा।
वैश्यस्त्रियम्बकेनैव शूद्रः पञ्चाक्षरेण तु ।। ३।।

स्त्रीणां च सधवानां तु पञ्चाक्षरत्रिपुण्ड्रकम् ।
विधवानां तथैवायं विधिप्रोक्तोऽथ शूद्रवत् ।। ४।।

त्रियम्बकेण मनुना ब्रह्मचारी सदैव हि ।
पञ्चब्रह्मादिमनुभिर्गृहस्थस्य विधीयते ।। ५।।

अघोरेणाथ मनुना विपिनस्थविधिः स्मृतः ।
यतिस्तु प्रणवेनैव त्रिपुण्ड्रादीनि कारयेत् ।। ६।।

अतिवर्णाश्रमी नित्यं शिवोहम्भावनात्मना ।
शिवयोगी च नियतमीशानेन विधारयेत् ।। ७।।

न त्याज्यं सर्ववर्णैश्च भस्मेदं शिवशासनम् ।
अत्रेदमितिहासं ते नामपञ्चकभासकम् ।। ८।।

वासिष्ठोऽथ मुनिः कश्चिदावन्त्यो वेदवित्तमः ।
धनञ्जयसमो विप्रो नाम्नैवासीद्धनञ्जयः ।। ९।।

तस्य भार्याशतं चासीद्रूपलावण्यशोभितम् ।
ज्यैष्ठिनेयस्तस्य सुतः करुणो नामतोऽभवत् ।।

उपनीतः स काले न वेदानप्यग्रहीत्स हि ।
भार्गवीमुपयेमे स कन्यां कमललोचनाम् ।। ११।।

पितर्युपरते काले भ्रातृभिः कलहोद्यतैः ।
विभज्य तत्पितृधनं भवनाशातटं ययौ ।। १२।।

तत्राश्रमोचितं कर्म निर्वर्त्य समवस्थितः ।
नृसिह्ममगमत्तत्र हरिं संसेवितुं द्विजः ।। १३।।

ब्राह्मणेन पुरो न्यस्तं नृसिह्मोपायनं फलम् ।
अजिघ्रत्सोऽथं जम्बीरं गन्धवत्काञ्चनप्रभम् ।। १४।।

तेन विप्रेण शप्तोऽसौ मक्षिकत्वमुपेयिवान् ।
भार्यामाहूय विप्रोऽसौ जगाद स्वस्य चेष्टितम् ।। १५।।

मां रक्षेति तदा प्राह कुरु त्वं शरणागतम् ।
मक्षिकां तामरक्षत्सा तदन्तरविरोधिनः ।। १६।।

भ्रातस्तेऽस्य तं पापास्तैलमध्ये ह्यमारयत् ।
सा मृतं स्वपतिं गृह्य अरुन्धत्यै न्यवेदयत् ।। १७।।

रुदतीं सा विशालाक्षी तां सान्त्वैः समतोषयत् ।

**अरुन्धती उवाच -**

शोकेनालमितो भद्रे भस्मना जीवयाम्यहम् ।। १८।।

अग्निहोत्रोद्भवं भस्म समानय द्रुतं मम ।
समानीय ततो भस्म ददौ तस्याः करे सती ।। १४।।

मृत्युञ्जयेन मन्त्रेण मृतजन्तौ तदाक्षिपत् ।
मन्दवायुस्तदा जज्ञेव्यजनेन शुचिस्मिता ।। २०।।

उदतिष्ठत्ततो जन्तुर्भस्मनोऽस्य प्रभावतः ।
ततो वर्षशतान्तेऽस्य भ्राता मृतिमवाप्तवान् ।। २१।।

काश्यपो दुष्टसर्पेण दष्टोऽपि पुनरुत्थितः ।
भस्मनोऽस्य प्रभावं वै तस्माद्रक्षेति नामतः ।। २२।।

तस्माच्च भस्मनो वीर्यात्तस्य पुत्रोऽभवन्मुनिः ।
दधीचिस्तपतां श्रेष्ठस्तपस्वी तपनप्रभः ।। २३।।

शाम्भवोऽसौ मुने तत्र सुरकार्यार्थमुद्यतः ।
गौतमस्य मुनेः पूर्वं विवाहेऽहल्यया सह ।। २४।।

रूपयुक्ता देवगणास्तां वीक्ष्य प्रमदोत्तमाम् ।
कामप्रमादोपहता निर्धूतरजसोऽभवन् ।। २५।।

इन्द्रोऽपि सङ्गतस्तस्या शप्तश्चाक्षपदेन हि ।
ह्रियावनम्रास्ते देवाः पुरुहूतपुरोगमाः ।। २६।।

दुर्वाससं भस्मनिष्ठमागच्छन्पापशान्तये ।
प्रणम्य शाम्भवश्रेष्ठं भस्मनिष्ठं सुरास्तदा ।। २७

प्राहुः प्राञ्जलयः सर्वे शाङ्गं मुनिवरं प्रति ।

**देवा ऊचुः -**

क्षमस्व नो मुनिश्रेष्ठ स्वागोहेतुं वदाद्यः नः ।। २८।।

इन्द्रं च कृपया वीक्ष्य पाह्यस्मान्मुनिशापतः ।
इत्युक्तं देववचनं श्रुत्वा तानाह सुव्रतः ।। २९।।

**दुर्वासा उवाच -**

तद्दोषं शमयिष्येहं भस्मनैव सुरोत्तमाः ।
शतरुद्रोत्थमन्त्रेण मन्त्रितेनैव भस्मना ।। ३० ।।

शमयिष्ये मुनिकृतां शापेनेन्द्रविरूपताम् ।
इत्येवमुक्त्वा दुर्वासा दत्तवान् भस्म चोत्तमम् ।। ३१ ।।

ब्रूत मद्वचनात्सर्वे यूयं वैकृतरेफसः ।
शतरुद्रेण मन्त्रेण भस्मोद्धूलितविग्रहाः ।। ३२

निर्धूतरेफ[1]सः सेन्द्राः सुरा आसन्ननेनसः ।
आश्चर्यमेतज्जानीहि प्रभावं भस्मनो मुने ।। ३३ ।।

एकार्णवे युगान्ते हि पुरा वै शयने हरिः ।
योगमास्थाय परमं शिश्ये स तमसावृतः ।। ३४ ।।

जानुदघ्नेऽर्णवजले सञ्चरन्परमेश्वरः ।
शूलासक्तमहास्कन्धः सोमार्धकृतशेखरः ।। ३५ ।।

दृष्ट्वा हरिं करुणया स्वभावतमसाऽऽवृतम् ।
अप्रणम्य स्थितं ज्ञात्वा तदज्ञाननिवृत्तये ।। ३६ ।।

स्ववक्षसि स्थितं भस्म नखेनादाय शङ्करः ।
प्रणवेनाभिमन्त्र्याथ शिवः पञ्चाक्षरेण हि ।। ३७ ।।

हरिमस्तकगात्रेषु भस्माक्षिपदथाञ्जसा ।
शिवाङ्गमष्टमूर्तित्तमष्टाङ्गं प्रणिपत्य च ।। ३९ ।।

---

1. रेफस् - sin/passion.

दृष्ट्वेश्वरं भक्तिगम्यं भस्माभक्षयदच्युतः ।
तदैवासीद्धरिस्तूर्णं पक्वबिम्बसमद्युतिः ।। ४० ।।

वासुदेवः शुद्धमुक्ताफलवर्णोऽभवत्तदा ।
तदाप्रभृति मुक्ताभो वासुदेवो मुनीश्वर ।। ४१ ।।

तुष्टाव देवं हृष्टोऽसौ शिपिविष्टमुमासखम् ।। ४२

**विष्णुः उवाच -**

त्र्यक्षाक्षस्योरुरक्षाक्षपितहृदि ममध्वान्तसङ्घातवक्षः -
क्षोभाक्षाक्षतशिक्षया द्रुतसुराध्यक्षाद्यसंवीक्षितः ।
वीक्षाशिक्षितदक्षपक्षसुमधृक्लान्तक स्वध्वरा-
ध्यक्षाक्षोभ्य गुणाकरार्णव विभो मां रक्ष उक्षध्वज(पालयोक्षं..)

वेदान्तस्तुतवस्तुरूपरहितामेयादिमायोज्झित
प्रज्ञानन्दघनैक निस्तुल लसत्प्राचांवचोदूरग ।
मस्तेनाभिनमन्ति ये तवपदं ते स्वस्तये हि क्षितौ
स्तोता कस्तव संस्तवोऽघगणनागण्येषु सक्तं मनः(?)।।

अशक्यं ते रूपं परम परमप्राप्य हर यो (ये)
भवाभावं प्राप्ता विधिहरिसुराश्चासुरगणाः ।
महाग्रासो रुद्रो भवसि भगवन् अद्भुततरो
वरीयानोजिष्ठो बृहदणुकरूपोऽसि महिमा(तः) ।।४५।।

इत्थं स्तुत्वा तदा विष्णुर्महादेवं तदावदत् ।
प्रणमन्भस्मफालो हि भवप्रवणमानसः ।। ४६ ।।

**विष्णुः उवाच -**

न शक्तिं भस्मनो जाने प्रभावं ते कुतो विभो ।
नमस्तेऽस्तु महादेव त्वामेव शरणं गतः ।। ४७।।

त्वत्पादयुगले शम्भो भक्तिरस्तु सदा मम ।
तत्र विष्णोर्वचः श्रुत्वा तत्स्तुत्या तुष्ट ईश्वरः ।। ४८।।

स्पृष्ट्वा विष्णोः शिरस्तत्र भस्मना पाणिगेन हि ।
उवाच घनघोषेण उच्चैर्घोषो महेश्वरः ।। ४९।।

**ईश्वरः उवाच -**

भस्मधारणसम्पन्नो मम भक्तो भविष्यसि ।
त्वं भस्मनिष्ठो नितरां पालयेदं चराचरम् ।। ५०।।

पुनस्ते भस्मनो वक्ष्ये महिमानं श्रृणुष्व मे ।
उमानाथो रमानाथं वीक्ष्य तामगजां तदा ।। ५१।।

एवमाह विरूपाक्षः पद्माक्षं वीक्ष्य सादरम् ।। ५२।।

**ईश्वर उवाच -**

मानस्तोकेति शस्तं भसितमति सितं हस्तमध्याङ्गुलीभिः
न्यस्तं फालतले त्रिपुण्ड्ररचनाद्विध्वस्तपापो भवेत् ।
स्रस्तं तस्य महेशपादकमलोदारप्रभूतं मधु
व्यस्तं पापगणेन ग्रस्तभसितेनाध्यस्तमस्ते शिवे (?)।।

त्रिपुण्ड्रविधृतिः(धरणं) शिवे किलमहाघशैलातुल-
कुलाचलविलोपने मुदिरवृष्टिसृष्टिप्रभम् ।

भवाखिलविभावरी परमचातुरी सीमभू-
र्भवेत विभवाधिकः परमकालकालप्रियः ।। ५४।।

अभावभवभावकृद्भवपदाब्ज भावोद्भवे
भवोरुविभवादिकं प्रतिभवेऽपि भावोऽस्य हि।
शिवे भसितधारणं सितहिताभितार्तिं हरे-
त्त्रिपुण्ड्रमिदमेव मे प्रबलपापतूलानलम् ।। ५५।।

क्षारं त्विदं निखिलपापहरं प्रदोषे
सारं धृतं भसितमेव भवैकसारम् ।
पारं भवेत भवसागरतारणाय
हारं वरं श्रुतिशिरोऽन्तगबोधकारम् ।। ५६।।

अकार्य करणाद्यसत्करणजातमप्यन्ततो ।
विशेषशरणेन वै भसितधारणेनाद्रिजे ।
शिरः कर उरोदरे करपदोरुभागे धृतं
भगादिहर पूजन प्रकरणैक हृत्पूरणम् ।। ५७।।

द्विजान्त्यजवधाच्छिवे त्यजति पातकं यत्कृतं
क्षरत्यजलिपीगतं शिरसि धार्यमेतत्सदा ।
भजेत भसितं सितं द्विजवरो नरोवान्त्यजो
मम प्रियतरोऽम्बिके भवति भाग्यपूर्णो जनः ।। ५८।।

।। इति श्रीशिवरहस्ये दशमांशे सप्तमोऽध्यायः ।।



## ।। अष्टमोऽध्यायः ।।

**स्कन्द उवाच -**

पुरा मङ्कणकः सिद्धः फालभूषणपादधीः ।
भस्मनिष्ठः सदा शम्भुं तपसाराध्य वै मुने ।। १।।

लेभे सिद्ध्यष्टकं विप्रोह्यष्टमूर्तिकृपारसैः ।
लेखालभ्यं पदं शम्भोर्लास्यात्कैलासमाप्तवान् ।। २।।

शिवपादैकनिष्ठेन मनसा स महामनाः ।
हारो हरैकमनसा योगं माहेश्वरं परम् ।। ३।।

युयोज विजितक्रोधः कामजिच्छाम्भवोत्तमः ।
शिवोक्तेनैव मार्गेण पुण्यमाथर्वणोदितम् ।। ४।।

चक्रे शिरोव्रतं श्रौतमश्रान्तमनसा मुनिः ।
भस्मनिष्ठोऽभवद्विप्रो भस्माङ्गो भस्मभावनः ।। ५।।

शतं वर्षाणि स मुनिस्तदा चक्रे शिरोव्रतम् ।
सदा त्रिषवणस्नायी त्रिवारं भस्मभूषणः ।। ६।।

वैराजमग्निमिन्धानो विरजाः स रराज हि ।
द्विजराजकलामौलिपादाब्जभ्रमरोपमः (महान् ) ।। ७।।

रुद्रमावर्त्तयन्भक्त्या युक्तं स मुनिरास्त हि ।
हिमांशुपाण्डरं भस्म तस्याङ्गात्सुस्रवे सदा ।। ८।।

**जैगीषव्य उवाच -**

क्रौञ्चदारण सर्वज्ञ विस्मयो मे महानभूत् ।
कथं मङ्कणकः सिद्धः शाम्भवो भस्मभावनः ।। ९।।

लेभे स परमां सिद्धिमित्यवादि त्वयाद्य हि ।
सर्वाथर्वमहासारं पापगर्वनिवारणम् ।। १० ।।

शिरोव्रतं कथं चक्रे तन्मे वद विशेषतः ।
शिवप्रसादपात्रं वै मुनिः केनाभवत्सदा ।। ११ ।।

शिपिविष्टोपदेशेन कथं चक्रे शिरोव्रतम् ।
तन्मे वद विशेषेण चरितं मङ्कस्य हि ।। १२ ।।

**सूत उवाच -**

जैगीषव्येन मुनिना पृष्टस्तुष्टोऽथ षण्मुखः ।
सन्मुखायाथ मुनये बभाषे माङ्कणीं कथाम् ।। १३ ।।

**सुब्रह्मण्य उवाच -**

शृणु त्वं मुनिभिः सार्धं वृन्दारकगणैर्मुने ।
यथोपदिष्टो देवेन मुनिर्मङ्कणकःपुरा ।। १४ ।।

गरभूषणपादाब्जे सदा प्रवणमानसः ।
हिमवच्छिखरे रम्ये पुण्यवृक्षोपसोभिते ।। १५ ।।

रसालतालहिन्ताल तमालामलकैर्युतम् ।
सालजालमहाबिल्वपनसाम्रातकैर्युते ।। १६ ।।

पुन्नागनागपीताम्रलिकुचैर्वकुलैर्धवैः ।
केतकीसर्जभूर्जाद्यैरर्जुनैश्चन्दनैर्युते ।। १७ ।।

क्रमुकाक्रमितद्राक्षावल्लीगुच्छविराजिते ।
एलान्दोलितवल्लीजमल्लिकाकुसुमोत्करे ।। १८ ।।

कदम्बवृन्दपुष्पौघरजसाच्छादिभूतले ।
वनावनीरणन्मन्दसमीरणविराजिते ।। १९ ।।

तत्पुष्पगुच्छदामोद्यत्सप्तच्छद विराजिते ।
राजत्कोकनदामोदसमुद्यन्मन्दमारुते ।। २० ।।

शारिकाविरुतोदारशाखाण्डजविराजिते ।
पुंस्कोकिल कुलाराव कोकीकूजनरञ्जिते ।। २१ ।।

गन्धर्वगीतबहुलवृन्दगध्वनिसंयुते ।
हरिणीगणसञ्चारपङ्कात्तखुरभूतले ।। २२ ।।

करटीकरसंस्त्राविमदामोदितभूतले ।
महामहिषहुङ्कारप्रतिध्वनितकन्दरे ।। २३ ।।

सुन्दरे तद्वने तत्र चचार स महातपाः ।
स हि मङ्कणकः सिद्धः फणिकङ्कणपूजकः ।। २४ ।।

महालिङ्गं तत्र मुनिः प्रतिष्ठाप्यार्चयच्छिवम् ।
त्रिकालं भस्मनिरतो विरतो विषयेषु सः ।। २५ ।।

त्यक्तैषणस्त्रिषवणं भस्मस्नानरतः सदा ।
अग्निरित्यादिभिर्मन्त्रैर्यश्चिताागतभस्मना ।। २६ ।।

त्रियायुषत्रिपुण्ड्राङ्कः शशाङ्काङ्कितमौलिधीः ।
शङ्कातङ्कादिरहितः कालान्तकसमर्चकः ।। २७ ।।

भस्मच्छन्नो भस्मसंस्थः स्वच्छो रुद्रमजीजपत् ।
शतं वर्षाणि हृष्टात्मा वर्षास्वभ्रावकाशकः ।। २८।।

अदभ्रभक्तिरभ्रौधैश्छन्नोऽपि स्वच्छमानसः ।
निरिच्छोऽन्यसुरार्चायां हृच्छयादिविवर्जितः ।। २९।।

पञ्चाग्निमध्यनिरतो भस्माभ्यक्तो भवाश्रयः ।
भवभावसमासक्तो भावो भवपदाश्रयः ।। ३०।।

शान्तिदान्त्यादिनिरतो मुक्तिमार्गैकतत्परः ।
तं तादृशं तपस्यन्तं पश्यन्ति त्रिदशा मुने ।।३१।।

(त) यदा पद्मासनवचः श्रुत्वा नत्वा तमब्रवीत् ।

**मङ्कणः उवाच -**

धन्यो मान्योऽद्य ते ब्रह्मन् दर्शनादेव केवलम् ।। ३२।।

नाहं त्वत्तो वरं याचे याचे भक्तिं शिवे स्थिराम् ।
त्वमेवेशप्रसादेन प्राप्तोऽसि परमं पदम् ।। ३३।।

वेदजालं सृष्टिबलं बलप्रमथनार्चनात् ।
याहि त्वं वै सुरैः सार्धं तव लोकं पितामह ।। ३४।।

इत्युक्तस्तं तदा प्राह मुनिं पद्मासनस्तदा ।

**ब्रह्मा उवाच -**

त्वं मङ्कण तपः सिद्धो भवभक्तोऽसि सत्तम ।। ३५।।

उत्तमोऽसि मुनीन्द्राणां प्रसन्नोऽस्तु भवस्त्वयि ।
भवस्व(?)तपसे भूत्यै भवभक्तिर्भवेत्वयि ।। ३६।।

भवतां भवशान्तिर्हि भवादेव भविष्यति ।
भविष्यति(भवोऽपि हि)त्वयि प्रीतो भविष्यति न संशयः ।।

भस्मच्छन्नोऽसि नितरां सिद्धोऽसि त्वं न संशयः ।
तमामन्त्र्य मुनिं तत्र ययौ लोकं विधिः सुरैः ।। ३८।।

पुनस्तताप सिद्धोऽसौ मङ्कणो भस्मभूषणः ।
फणिभूषणपादाब्जचरण (पूजन) स्मरणादरः ।। ३९।।

तं विष्णुर्मरुडारूढः शङ्खचक्रगदाधरः ।
स्वपार्षदैः परिवृतो ययौ तं मुनिपुङ्गवम् ।। ४०।।

तमाभाष्यं बभाषैवं विषमाक्षार्चने रतम् ।

**विष्णुः उवाच -**

शाम्भवोऽसि मुनिश्रेष्ठ शिपिविष्टपदार्चकः ।। ४१।।

निष्ठां तवेदृशीं दृष्ट्वा विस्मयो मे महानभूत् ।
तपो वीक्षितुमायातः शिवे भक्तिं तवेदृशीम् ।। ४२।।

**सूत उवाच -**

इत्थं विष्णुवचः श्रुत्वा निमील्य नयने स्वके ।
अशाम्भवं च तच्चिह्नं दृष्ट्वा विष्णुं तदाब्रवीत् ।। ४३।।

**मुनिः (उवाच)**

नाहं त्वत्तो वरं याचे याचे भक्तिं महेश्वरे ।
अशाम्भवं त्वां दृष्ट्वैव नाहं वीक्षे जनार्दनम् ।। ४४ ।।

यस्य लिङ्गार्चनेनैव विष्णुत्वं प्राप्तवानसि ।
त्वं पालको जगत्यस्मिन् वैकुण्ठस्याधिपः कृतः ।। ४५ ।।

महेशेन प्रसन्नेन, न त्वत्तः काङ्क्षये वरम् ।
याहि याहि यथा जोषं विशेषो नास्ति ते मयि[1] ।।४६ ।।

नाहं त्वत्तोऽभियाचे वरममरधुनीधन्यमूर्धन्यमौले
नाहं नान्यं सुरं वा शतमखममरं शङ्करान्यं न वीक्षे।
यत्त्र्यक्षाक्षतपादपङ्करजोलेशांशलेशांशतो
याचेऽहं वरमेव नावरमहं विष्णोर्न ईष्टे(ईशे)मनाक् ।।४७ ।।

इत्युक्तं मुनिवचनं निशाम्य धार्ष्ट्यं ।
विष्णुस्तं मुररिपुरेवमानभाषे ।। ४८ ।।

**विष्णुः उवाच -**

त्वं भावोऽसि भवोत्तमाम्बुजपदध्यानैकसन्मानसो
भस्मोद्धूलितदिव्यभासुरमहादिव्यत्रिपुण्ड्राङ्कितः ।
त्वद्भावं विमलं विलोक्य तव हृद् ज्ञातुं प्रवृत्तस्त्वयि
भावस्थः स भवान्तको हि भगवान् शीघ्रं प्रसन्नो भवेत् ।।

---

1. विशेषो मत्त स्त्वयि नास्तीत्यर्थे एवं प्रयोग भवेदिति भाति ।

इत्युक्त्वा स ययौ हरिर्हरमहाभक्तं च युक्तं मुनिं
सक्तं शम्भुपदाम्बुजार्चनरतं संवीक्ष्य हृष्टो भवन् ।
लक्ष्म्या वै गरुडेन पार्षदगणै रुद्राभिषेकप्रियो
नीरैश्चाप्यभिषिच्य लिङ्गमगमद्धन्यं मुनिं भावयन् ।।

**ईश्वरः उवाच** -

कति कति मतिहीना दुर्हृदोऽशैवभावा
जलहृत इव मीना दैत्यतापानुतप्ताः ।
वपुषि भसितहीना लिङ्गपूजाविरक्ता
विविधनरकभोगे भागिनस्तेऽद्रिकन्ये ।।

।। इति श्रीशिवरहस्ये दशमांशे मङ्कणिकोपाख्याने
अष्टमोऽध्यायः ।।



## ।। नवमोऽध्यायः ।।

**स्कन्द उवाच -**

एवं तपस्यतस्तस्तस्य मङ्कणस्य महामुनेः ।
भस्माभ्यक्तस्य नियतं त्रिपुण्ड्रालङ्कृतस्य च ।। १।।

शरत्सुधांशुधवलभस्माङ्गान्निर्गतं मुनेः ।
ततः स्वाङ्गं समुद्वीक्ष्य त्र्यक्षलिङ्गार्चनप्रियः ।। २।।

भस्मनिष्ठो मुदं प्राप शिपिविष्टनिविष्टधीः ।
जपन् श्रीशतरुद्रीयं हर्षवर्षप्रसन्नधीः ।। ३।।

पुलकैरुल्लसद् गात्रस्त्रिणेत्रपदभावनः ।
ततस्तुष्टाव हृष्टात्मा मङ्कणः फणिकङ्कणम् ।। ४।।

**मङ्कणः उवाच -**

अहो मे तपसः सिद्धिः सिद्धा शम्भोः प्रसादतः ।
मदङ्गेभ्यो भस्मधाराः शरद्राकाकराः सदा ।। ५।।

विनिर्गता ममातीव प्रमोदे (दात्) मोदते मनः ।
इत्थं स मङ्कणस्तत्र विकत्थन्* मेरुमस्तके ।। ६।।

ननर्तानन्दविवशो महेशं संस्तुवंस्तदा ।
शतं वर्षाणि मुदितो भस्म स्वाङ्गेऽभि वीक्ष्य सः ।। ७।।

---

* विकत्थमान इत्यर्थे

मङ्कणः (स्तौतिस्म)

हे शम्भो भगवन्महेश गिरिजाजाने न जाने विभो
त्वत्तत्वं शशिसङ्गरञ्जितमहागङ्गातरङ्गोद्यत ।
विद्युत्पुञ्जसमाधिकावृतजटाजूटं निटालेक्षणं
देवं देवशिखामणे गरगलोदारं हरं शङ्करम् ।।८।।

मारापारशरातिभीकरकणासारेण संहारिणं
भो भर्ग त्रिजगच्छरण्य चरणाम्भोजप्रभाभावतः ।
भस्मोद्धूलित कामिनीवरधृतार्धाङ्गाङ्गसङ्ग प्रभो
त्वत्तो वेद्मि न चैव देव कुसुरोदारं वरं पामरम् ।।

हारं धीरतरं ममैव हृदयं जानासि शम्भोऽधुना
वीक्षाशिक्षितमन्मथान्धकपुरं दक्षादिदीक्षापहम् ।
त्र्यक्षं भिक्षितमौनियोषितमुमाकान्तं क्षपेशाङ्कितं
उक्षाङ्गस्थितमप्रमेयविभवाध्यक्षं हि वीक्षे कदा ।।

भक्षीभूतगरं भवार्णवहरं पक्षीन्द्रवाहार्चितम् ।। ११।।

सोमावतंस वरसामसुगीत शम्भो
निर्धूतकाम गिरिजापरिपूर्णकाम ।
निः सीमभूममहिमन् भगवन्नमस्ते
त्वं व्योमधाम गरिमालघिमासमश्च ।। १२।।

त्वच्छासनं भसितमेव भवादिरोग-
संशामनं शमनभेदनमेव शम्भो ।

तद्भेषजं भवति भूतिकरं महेश
पारं[1] भवेद्भवसारित्पतितारणाय ।। १३ ।।

लिम्पन्निलिम्पपदवीमदवीयसीं वै
यात्येव तद्भसितफालतलो हि (ऽपि)जन्तुः ।
मृत्स्नामलीकतिलकं त्वलिके हि बिभ्र-
त्कृत्स्नं महाघनिचयं स लभेत शम्भो ।। १४ ।।

यो नित्यं भसितत्रिपुण्ड्ररहितो हा [2]आहिताग्नावधो
भग्नो यात्यनुवासरं स नितरां नग्नो विभूतिं विना ।
शावास्पृश्यसमं तदीयमधुना देहं हि दाहोपमं
हा हा हन्त भवेत पातककरं [3]त्र्यक्षाधुना द्रक्षये (?) ।।

तस्यानुक्षणदुर्मुखाधममुखं दृष्टं च दुःखास्पदं
यात्येवानुदिनं स शावजमहास्पृश्योपमः सूतकी ।
घोरां याति च यातनां यमकृतां निःसीमकामातिगां
तस्योद्धारपरम्परासु न हरिर्वाचां पतिर्नो सुराः ।। १६ ।।

[4]भाण्डास्तर्क वितर्ककर्कशधियो भस्मत्रिपुण्ड्रोज्झिता-
स्ते सौर्युद्धतबाहुदण्डविधृतप्रोच्चण्डदण्डाहताः ।
धाराखड्ग निपातनाधममहामुण्डादिषण्डाकुलाः
कोदण्डोरुशराभिघातसुमहादेहा द्रवन्त्यार्तवत् ।।१७ ।।

**मङ्कण उवाच -**

शिवार्चनपरौ करौ शिवविलोकने लोचने
शिवध्वनिपरे श्रुती शिवनमोविनोदं शिरः ।

---

1. उडुपायमानं भवेत् इति तात्पर्यम् ।।
2. वह्नौ जुहोति द्विजः ।
3. त्रयक्षाद्य पश्याम्यहम् ।
4. भण्ड - Jester.

अहो परमदुर्लभं किमपि भाग्यमस्मादृशां
शिवैकविषयं मनः शिवपतिव्रता भारती ।। १८ ।।

**स्कन्द उवाच -**

एवं स्तुवन्तं नृत्यन्तं मङ्कणं शिवतत्परम् ।
शाम्भवं ते सुरा दृष्ट्वा विस्मयोत्फुल्ललोचनाः ।। १९ ।।

[1]नृत्यमानं जगच्चापि ससुरासुरमानवम् ।
अधरोत्तरमुद्भ्रान्तं शाम्भवस्य तपस्यया ।। २० ।।

नानर्तीदं जगत्किं वा इति चिन्ताकुलान्तराः।
पद्मयोनेः सद्म गत्वा प्रोचुर्वृत्तं मुनेः सुराः ।। २१ ।।

**सुरा ऊचुः -**

पद्मयोने नमस्तेऽस्तु लोकसर्जक पाहि नः ।
तर्जमानान् गर्जमानान् (?)दृष्ट्वा भीतिः प्रजायते ।। २२ ।।

शाम्भवो मङ्कणो नाम फणिभूषणपादधीः ।
स भस्मधारणाद् हृष्टो निष्ठामात्यन्तिकीं गतः ।। २३ ।।

मेरुमौलौ स लिङ्गाग्रे नृत्यत्युन्मत्तवन्मुनिः ।
तेनेदं भ्राम्यते ब्रह्मन् जगत्स्थावरजङ्गमम् ।। २४ ।।

अकाण्डमेव ब्रह्माण्डं नानर्तीदं निवारय ।
इत्युक्तः स सुरैर्ब्रह्मा विचिन्त्य मनसा चिरम् ।। २५ ।।

---

1. नृत्यत्सर्वजगच्चापि ।

सुरान् ब्रह्मा तदा प्राह भक्तिं वीक्ष्य मुनेस्तदा ।

**ब्रह्म उवाच -**

शाम्भवोऽयं मुनिश्रेष्ठः पूर्वं मद्वरवारकः ।। २६ ।।

मया निवारितुं (?) शक्यो नासौ मुनिरयं सुराः ।
न शाम्भवेषु धाष्ट्र्यं मे न विष्णौ वापि वा सुराः ।। २७ ।।

प्रसादयाम यत्नेन भववैद्यं महेश्वरम् ।
तेनैव शमयिष्येऽहं व्येतु वो मानसो ज्वरः ।। २८ ।।

इत्युक्त्वा स सुरैः सार्धं कैलासं शाङ्करं ययौ ।
सुरैश्च विष्णुना साकं निरुद्धो नन्दिना तदा ।। २९ ।।

तद्द्वारि स गिरेस्तत्र गिरां नाथः सुरैः सह ।
रमानाथेन स तदा उमानाथं प्रसन्नधीः ।। ३० ।।

तुष्टाव विमलोदारवचोभिः शिवमेव हि ।। ३१ ।।

**देवा(ब्रह्मा उवाच) ऊचुः -**

शम्भो बालमृगाङ्कशेखर जटाजूटोरुकोटीरधृक्
स्फारोर्वीधर धैर्यदारण महागङ्गा तरङ्गौघहृत् ।
कालान्धान्तक कामदक्षभगदृक्संहार पाह्यद्य नो
देवान् मङ्कणनृत्तभीतिपरमानाश्वासयाद्य प्रभो ।।

प्रालेयाचलकन्यकाविलसितश्रीमन्युदेह प्रभो
मन्युं संहर दैन्यनाशक हर त्वत्तो हि नान्यः सुरः ।
धन्यान्नः कुरु पापजन्यसुरतादुःखं विहन्याः प्रभो
स्वर्वापीन्दुकलाललाम भगवन् त्वं चाहनन्यो गतिः ।।

भव भूतपते सुरेषु भाव्यं
भवदुःखं भुवि नाशयाशु भावैः ।
भवभावविभावना भवेन्नो
विभवाः सन्तु भवाय ते नमोऽस्तु ।। ३४।।

अभ्यर्णं भव तावकीनचरणं सन्तार्णमेवास्तु नः
भावोद्यं भवकार्णवैकतरणे उद्दीर्णमेव प्रभो
पाह्यस्माञ्छरणाय पूर्णदयया दीर्णं सुराणां गणं
तूर्णं घूर्णितमेतदद्य सुमुनेर्नृत्तं हि निर्वापय ।। ३५

हरि शशि शिखि बाल घोणघूर्ण-
त्रिपुरवितारण शेषभूषणाद्य ।
फणिमणिघृणिकङ्कणोरुहस्त
प्रमथाधीश सनाथयाशु हृद्य ।। ३६।।

गुरुवरगरगौरवोरुबिभ्यत्
त्रिदशानां शिव दुर्दशाविनाश ।
अविनाशिशरीर व्योमकेश
जगदाकाशशरीर कोशकाश ।। ३७ ।।

मुनयः प्रशमायनाः सदा ते
शमनाघातपदं हृदाभिधाय ।
समुदायमिमं मुदा त्वघानां
मदनारे किल नाशयन्ति शम्भो ।। ३८।।

शम्भो त्वदङ्कवसतेः किल मङ्कणोऽयं
तुल्यप्रभो भसितभासितनुः सदैषः ।

क्रौञ्चान्तकस्य सदृशः सुदृशा तमीक्ष्य
तं वारयाशु नटनाज्जगतोऽवनाय ।। ३९।।

गीर्वाणवर्गकृतसंस्तुतिभिः प्रतुष्टः
ईष्टे हरो मुनिमसावभिद्रष्टुमेव ।
यातो दयासुरसया सुरवृन्दवन्द्यो
मोदाय पर्वतवरात्मजया समेतः ।। ४०।।

कैलासगोपुरवरान्निरगात्पुरारिः
पादाम्बुजं *तुरगवैरिवहान्तकं स्वम् ।
सन्दर्शयन्तुरगवैरिवहादिदेवा-
नालोकयन्हिमगिरौ मुनिलोकनाय ।। ४१।।

।। इति श्रीशिवरहस्ये दशमांशे देवस्तुतौ
नवमोऽध्यायः ।।



---

* तुरगवैरिवहः अश्वानां शत्रुभूतेन महिषेण। उह्यते इति तथाभूतो यमः, तस्य अन्तकम् (अन्तं करोति इति तम् ) ।

## ।। दशमोऽध्यायः ।।

**स्कन्द उवाच -**

तत्स्तुत्या तुष्टहृदयो भगवान्गोवृषध्वजः ।
द्रष्टुं मङ्कणकं सिद्धं स्वयं गौर्या विनिर्ययौ ।। १।।

महापाण्डरमारुह्य वृषं कैलाससप्रभम् ।
त्र्यक्षः शम्बरशूलोद्यत्करो नीलसुकन्धरः ।। २।।

गङ्गातुङ्गजटामौलिः शशाङ्ककृतशेखरः ।
दिव्यभस्मत्रिपुण्ड्रोद्यत्फालामलविराजितः ।। ३।।

फणामणिघृणिप्रोद्यद्धीरहाराहिसङ्कुलः ।
गुरुणा गरजातेन नीलीभूतसुकन्धरः ।। ४।।

दन्तित्वक्परिवीताङ्गो व्याघ्रचर्माम्बरावृतः ।
वामभागमहादेवीवीक्षितापाङ्गवक्त्रकः ।। ५।।

नन्दिभृङ्गिमहाकालस्कन्दविघ्नेशसेवितः ।
वृन्दारमकुटीकोटिमणिभी राजिताङ्घ्रिकः ।। ६।।

गणेन्द्रवदनोद्भूतशङ्खकाहलनिःस्वनैः ।
मृदङ्गढक्काभेरीणामारावोद्घोषिताम्बरः ।। ७।।

छत्रचामरमायूरव्यजनात्तकरैर्गणैः ।
पार्श्वतः सेवितः शम्भुराययौ मङ्कणान्तिकम् ।। ८।।

सुनिर्जरकरोत्सृष्टपुष्पवृष्टिरभूच्च खात् ।
ननृतुस्तालसाम्येन लयेनाप्सरसां गणाः ।। ९।।

प्रावाद्यन्तोरुवाद्यानि गन्धर्वाः किन्नरास्तथा ।
जगुः शिवापदानानि नारदाद्याः सतुम्बराः ।। १० ।।

विष्णुब्रह्मादिभिर्देवैर्जयेशेति नतः स्तुतः ।। ११ ।।

**देवा ऊचुः -**

देवादिमस्त्वमसि सोमकलाललाम-
स्सामादिसंस्तुतपदः श्रुतिसीमभूमा ।
व्योमावकाश महिमा गरिमा त्वमीश-
स्सर्वेषु हृत्सु सुधियामवनो महेश ।। १२ ।।

हेमाचलत्तधनुषा करमुत्कटं ते
कामादिदर्पविनिवारकसत्पदं ते ।
भामार्धकायमतिसुन्दरमीक्षितं ते
त्र्यक्षाधुना सुरगणेषु भवत्कृपा ते ।। १३ ।।

इत्थं देवस्तुतिं श्रुत्वा तान्वीक्ष्य करुणादृशा ।
हिमवच्छिखरं प्राप सोऽपश्यन्नृत्तमद्भुतम् ।। १४ ।।

मङ्कणस्य महादेवः प्रणतो मुनिना स्तुतः ।
पुलकाङ्कुरिताङ्गोऽथ नृत्यंस्तुष्टाव शङ्करम् ।। १५ ।।

गणदेवेषु पश्यत्सु देवदेवं स मङ्कणः ।। १६ ।।

**मङ्कण उवाच -**

शम्भो भर्ग भवेन्दुशेखर महादेवाव्ययेशान ते
पादद्वन्द्व समर्चनार्जितमहाभक्तिप्रभाभावितः ।

भावोऽहं भव भावभावपरमानन्दाम्बुधौ मग्नधीः
उन्मत्तोत्तमधन्यमान्यपदवीमासादितः सादरम् ।।

(हे शम्भो शशिखण्डसुन्दर जटाकाण्डोरु)
मातङ्गत्वगलङ्कृताङ्ग गिरिजादेहार्धसङ्ग प्रभो
हस्ते बालकुरङ्गसङ्ग शशधृग्वह्न्यर्कनेत्रोज्ज्वल ।
लिङ्गस्थाङ्ग महोत्तमाङ्गविलसद्गङ्गामृतांशो भव-
त्पादौ वै शरणं प्रयामि सततं पापौघभङ्गाय मे ।। १८

उग्र भीम भव भर्ग शङ्कर
त्र्यक्ष रक्ष मख भक्ष वीक्ष माम् ।
अन्धकान्तक कृतान्तखण्डन
वेदवेद्य जितमन्मथ पाहि ।। १९ ।।

त्वपाद पद्मपरिषेवणयत्नलभ्यं
पुण्यासपत्नामघहारि विशुद्धनूत्नम् ।
हृष्टो विशिष्ट करुणारुण शिष्टमिष्ट-
मोजिष्ठमष्टतनवे करवै नमस्ते ।। २० ।।

वस्तु स्वस्तिदमस्तु मे हृदि सदा वेदोरुमस्तस्तुतं
निस्तोकं वरहस्तशस्त्रलुलितब्रह्मोत्तमाङ्गं परम् ।
शूलत्रस्तसमस्तदैत्यनिकरारम्भेण मातङ्गहृ-
च्छस्तं निस्तुलमाविरस्तु पुरतो ध्वस्ताघसङ्घं परम् ।।

अद्राक्ष्म त्र्यक्षपादं फणिघृणियुक् लेख मौल्युत्थरेखा
किणमसृणसुसिद्धं सिद्धसंसिद्धिवन्द्यम् ।
अरुणिमशरणानां लोकलीलाविनोदं
मदमुदितभवानां भावनानाशहेतुम् ।। २२ ।।

अयज्महि पुरा जनौ मदवशान्न ते प्रीतये
अयुज्म यदि शाङ्करं तवसुयोगमत्यादरात् ।
अदद्महि महापथप्रतिपदोरुदानैरपि
दधीमहि हृदामुदा तव सरोज पादं सदा ।। २३।।

अधीमहि सदाघहं सुगममुक्तिमार्गप्रदं
शतश्रुतिशिरोगतं विमलमेवरुद्रं सदा ।
अलेपि भसितं सितं विमलमेव पुण्ड्रं सदा
भवेम सततं भवे भव तवैकभावाः सदा ।। २४।।

अचकृम वरिवस्यां शाङ्गलिङ्गोत्तमाङ्गे
तव सदयकटाक्षैर्मोदमानाः सदैव ।
तव शिव चरणाब्जालोकनेनालमेत-
न्नवरसुरवराणां वारणे कारणं मे ।। २५।।

**सूत उवाच -**

तदा स फणिकङ्कणस्तुतिपरं सदा मङ्कणं
मुदा भसितधारिणं मुनिवरं महान्तं महान्तं हरः ।
अहस्करविलोचनप्रसृमरैः करैः फुल्लितं
गिरीन्द्रजनिताननामलसरोजमीक्ष्याह हि ।। २६।।

**ईश्वरः आह -**

शाखाशिखादिसुनिरुक्तपदक्रमादि-
बोधार्थवादनिचयाः सकला अधीताः ।
तेनेशतोषकरणोऽयमखादि सेष्टा (?)
अष्टाकृतेः प्रियतराः सकला अपीष्टाः ।। २७।।

सद्योजातेन सद्यो भसितयुततनुः पूत एवाभिजातः
पापौघं तस्य भेद्यं भवति भवगदे वैद्य एवायमीशे ।
वेद्यं वेदान्त गद्यं पदमभिभवते पद्यमेवाभिजातं
खिद्यत्येवाधिदुःखं हृदुदरभवजं भिद्यते ग्रन्थिजातम् ।।

येनैव शङ्करगिरा प्रसृतोरु वेद-
मौल्यर्थसारनिहितामृतभस्म धिक्स्यात् ।
तेनोर्वरादि विधिबोधितषोडशोरु-
दानानि वाडवकरे विहितानि गौरि ।। २९।।

नीचानामपि मोचनाय गिरिजे वाचा श्रुतेरङ्गितो
मार्गोऽयं हि विरिञ्चिवञ्चितमहाधर्माश्रमोत्थश्रमैः ।
तच्चिन्ताहतिदुर्धियो विधिममुं मुञ्चन्ति दुःखाच्च ये
सिञ्चन्ति स्वतनुं यमालयगतामद्भस्मसङ्गोज्झिताः ।।

।। इति श्रीशिवरहस्ये दशमांशे मङ्कणस्तुतौ
दशमोऽध्यायः ।।



## ।। एकादशोऽध्यायः ।।

**स्कन्द उवाच -**

तत्स्तुत्या तुष्टहृदयः शिपिविष्टोऽम्बिकासखः ।
तमाह शाम्भवं विप्रं मङ्कणं भस्मभूषणम् ।। १।।

श्रृण्वतां ब्रह्मविष्णूनां सुराणां शशिशेखरः ।

**ईश्वरः उवाच -**

नृत्तादुपरमस्वास्माज्जगत्क्षोभकरान्मुने ।। २।।

भस्मसिद्धोऽसि धन्योऽसि त्वं मान्योऽसि मुनिष्वपि ।
शाम्भवोऽसि विशेषेण भस्मनिष्ठो विशिष्टधीः ।। ३।।

त्वत्तपस्यातापितास्ते (सर्वे) ब्रह्मविष्ण्वादयः सुराः ।
मामेव शरणं प्राप्तास्तस्मात्ते सन्निधिं गताः ।। ४।।

शिरोव्रतमिदं तेऽद्य प्रवक्ष्याम्यखिलं तव ।
अथर्वशिरसि प्रोक्तं श्रृण्वेभिः सुरसत्तमैः ।। ५।।

हृत्तमोनाशकं पुण्यं ममज्ञानप्रदं मुने ।
अज्ञानध्वंसनार्कं ते वितर्कमतिदूरगम् ।। ६।।

त्वयि गुह्यं न मे किञ्चिद्भक्तस्त्वं मत्पदाम्बुजे ।
त्वद्भक्तिभावितोऽहं त्वं देव्या दृग्गोचरीकृतः ।। ७।।

मया कैलासशिखरे भवान्यै भवनाशकम् ।
शिरोव्रतमिदं प्रोक्तं नान्येषूक्तं मुनिष्वपि ।। ८।।

तत्तेऽहं सम्प्रवक्ष्यामि साक्षात्त्र्यक्षप्रसादकृत् ।
*कृत्वेदं पावनं विप्र व्रते सर्वं कृतं भवेत् ।। ९।।

अधीतास्तेन वेदा हि साङ्गोपनिषदः सदा ।
तेनेष्टाः सकला यागा (दत्तदानः स एव हि ।। १०

ब्रह्मविष्ण्वादिभिर्वन्द्यः स हि मङ्कणको भवेत् ।
स्कन्द विघ्नेशतुल्योऽसौ एवमेत्याश्रमी भवेत् ।। ११

शिरोव्रतं विधायैतदाश्रमे श्रममाप्नुयात् ।
ब्राह्मणः क्षत्रियो वैश्यो ब्रह्मचारी गृही वनी ।। १२

सन्न्यासी वा मुनिश्रेष्ठ शिरोव्रतविवर्जितः ।
वेदान्तोत्थं मम ज्ञानं न स विन्दति जातुचित् ।। १३

नैव शान्तिमवाप्नोति शाश्वतीमिति मे मतिः ।
अभ्यस्यापि च वेदान्तं शिरोव्रतविवर्जितः ।। १४

शब्दार्थविद्भवेदेव न साक्षात्कृतिमाप्नुयात् ।
गुरुर्वापि तथा शिष्यो विशिष्य मुनिसत्तम ।। १५

शिरोव्रतं च यैश्चीर्णं तैस्तीर्णो भवसागरः ।
अन्ये तत्र निमज्जन्ति मत्प्रसादपराङ्मुखाः ।। १६

तस्माच्छिरोव्रतं पुण्यं यैः समाचरितं मुदा ।
तेषां वै हृदयग्रन्थिर्भिन्द्याच्छिन्द्याच्च पाशतः ।। १८

---

* कृतेऽस्मिन् पावने विप्र व्रते सर्वं कृतं भवेत् ।

ब्रह्मचारी गृहस्थो वा वनस्थो वाथ मस्करी ।
शिरोव्रतविधिं कृत्वा सोऽतिवर्णाश्रमो भवेत् ।। १९

स एव मुक्तो भक्तो मे नान्यः संसारवारिधेः ।
न पुण्यपापैर्बध्नाति बद्धवद्भासितो भवेत् ।। २०

**ईश्वरः उवाच -**

मर्त्या अमर्त्यपदवीमपि संल्लभन्ते
सुत्याविहीनमतयोऽपि महोशि कान्त्या ।
व्रात्या अपीन्द्रसदृशोत्तमभोगजात्या
वात्या गताङ्ग परिशोभ भजन्ति भूत्या (?) ।। २१

कृत्याकृत्यविवर्जिताश्च गिरिजे सत्यानुवृत्त्या हत-
व्रात्यास्ते गृहिणीफणी(?)कुरसनादष्टाश्चदुष्टाशयाः ।
स्तुत्या नत्या विभूत्या मम निगम महासारभूत्या विहीनाः
फाले काले तिलकुलबलाद्धर्षमाणा हि भीत्या ।।(?)२२

ये गार्हपत्यभसितं किल फालदेशे
लिम्पन्ति ते हि गृहिणो महिता निलिम्पाः ।
वन्योऽपि मान्यपदवींमदवीयसीं स
नैःश्रेयसीमथ लभेत भवोद्भवेन ।। २३

समिद्दाहोत्पन्नैः सितभसितधारी यदि शिवे
विराजोत्थेनापि द्रुहिणसदने द्रोहमतिभाक् ।
विराजत्येवायं भसितलसिताङ्गः श्रुतिशिरो-
विहारी वर्णी वै भवति मम सम्पूर्णकृपया ।। २४

यतिः श्रुतिशिरोव्रतं नियतमेतदेवाचर-
न्मतिप्रदमुमे सदा सुगममार्गमेवागमे ।
लभेत निजमोंपदं विदितवेद्यमोदप्रदं
त्रिपुण्ड्रपरिधूलनं शरणमेव कर्मन्दिनाम् ।। २५

यतिर्नियतिभाग्भवेत् कुमतिमार्गदूरादरे
गतिप्रदमिदं सदा भसितभासिताङ्गः शिवे ।
स याति विमलं पदं पशुपतेर्विमुक्तिप्रदं
स एव भवपाशतश्चिरतरां च मुक्तिं व्रजेत् ।। २६

प्रणवप्रवणो यतिर्भवे-
न्मम लिङ्गार्चनभक्षितौदनः ।
भसितं सितमेव धारयन्
श्रुतिविद्यात्मगतिं लभेत सः ।। २७

त्रिपुण्ड्रविलसत्तनुर्भवति पूर्वपुण्योदयै-
र्विकुण्ठन विकुण्ठितो भवति पापतापानलः ।
स एव मम पूजने भवति भस्मनोऽर्हो जनः
स एव सुखसम्पदां पदमवाप्य मोदेत हि ।। २८

भस्मालङ्कृतफालमेव सफलं यत्कालकालेनं तं
तल्लोलामललोचने हि सफले मल्लिङ्गलोकावृते ।
यद्बाहो शिखरे त्रिपुण्ड्ररहिते हस्तौ मम स्पर्शकौ
यत्पादौ सततं मदालयगती सम्प्रक्रमेण क्रमौ ।। २९

धिग्धिक्फालतलं त्रिपुण्ड्ररहितं शून्यं तदा वै फलं
भस्माभ्यक्ति विवर्जिता तनुरियं मन्ये शिवे शून्यकम् ।
मन्मन्युप्रभवाक्षिक़ोणलसिते घोरे च फालानले
तूलायेत शिवे जनः किल तदा सद्भस्मसङ्गोज्झितः ।।

अहस्करस्तस्कर एव तस्य
मयस्करार्चापरिवर्जितस्य ।
विलोकने लोपित एव लोचने
नालोकि लोकेऽपि स पापिना समम् ।।

।। इति श्रीशिवरहस्ये दशमांशे
एकादशोऽध्यायः ।



## ।। द्वादशोऽध्यायः ।।

**स्कन्द उवाच -**

शृणु मङ्कण सिद्धार्थ भस्मसिद्ध महामते ।
येन चीर्णेन वेदान्तज्ञानं सम्यग्विजायते ।। १

शिरोव्रतमिदं श्रौतं पुण्यमाथर्वणोदितम् ।
तस्यैव विधिमाख्यास्ये शृणु त्वं सावधानतः ।। २

बहूनां जन्मनामन्ते शिरोव्रतविधौ रतिः ।
कस्य चिज्जायते पुंसो न सर्वस्यापि वै मुने ।। ३

येन द्विजत्वं सम्प्राप्य बहुजन्मसु सत्तम ।
अधीताश्चतुरो वेदाः साङ्गोपाङ्गपदक्रमाः ।। ४

तस्यैव भवति श्रद्धा शिरोव्रतविधौ मुने ।
येन यागाः कृताः सम्यगेकाहाहीनसत्रकाः ।। ५

शिवप्रीत्यर्थमेवेह स्वाद्वन्ना बहुदक्षिणाः ।
तस्यैव जायते श्रद्धा . . . . . . . . . . ।। ६

येनोर्वरा द्विजे दत्ता देशे काले च पात्रके ।
तस्यैव जायते श्रद्धा . . . . . . . . . ।। ७

येन षोडश दानानि दत्तानि विधिवन्मुदा ।
तस्यैव जायते श्रद्धा . . . . . . . . ।। ८

गृहाराममठोदारवापीकूपतटाककम् ।
कृतं सम्यङ् मम प्रीत्यै अन्नपानीयदानकम् ।। ९

तस्यैव जायते श्रद्धा . . . . . . . . . . ।
उग्रप्रीत्यर्थमेवेह अग्रहारकरः पुमान् ।। १०

शाम्भवानां यतीनां च तथैव शिवयोगिनाम् ।
मठं मठोपकरणं दद्याद्यो विधिवन्मुदा ।। ११

तस्यैव जायते श्रद्धा . . . . . . . . . . . ।
शाम्भवानन्नदानैश्च यस्तोषयति सर्वथा ।। १२

शाम्भवान्पूजयेद्यस्तु वाचा वापि विचार्य यः ।
तस्यैव जायते श्रद्धा . . . . . . . . . . . . ।। १३

शिवागारपरो यश्च शिवोत्सवकरस्तथा ।
दीपधूपप्रदो यश्च सर्वदाऽऽयतने मम ।। १४

तस्यैव जायते श्रद्धा . . . . . . . . . . . ।
मत्प्रियालोकको यः स्यात्प्रदोषेषु विशेषतः ।। १५

तस्यैव जायते श्रद्धा . . . . . . . . . . . ।
मत्पूजापरमो यश्च बिल्वपत्रादिसाधनैः ।। १६

तस्यैव जायते श्रद्धा . . . . . . . . . . . ।
अष्टम्यां सोमवारे च चतुर्दश्यां तथा मुने ।। १७

अविमुक्ते तथा तीव्रा भक्तिर्विप्र गरीयसी ।
मयि विश्वेश्वरे शम्भौ मणिकर्ण्यां तथा मुने ।। १८

तस्यैव जायते श्रद्धा . . . . . . . . . . . . .।
क्षेत्रेष्वन्येषु सततं यो वसेन्मम सर्वदा ।। १९

कुरुक्षेत्रे प्रभासे च गङ्गासागरसङ्गमे ।
बदर्यां च विशालायां पिण्डारे विरजे तथा ।। २०

रुद्रकोटौ नर्मदायां ओङ्कारे भृगुतुन्दके ।
केदारे च महाकाले गयायां च प्रयागके ।। २१

त्र्यम्बके च प्रतिष्ठाने मुने चामरकण्ठके ।
पुष्करे वेणुविपिने श्रीशैले कोटजे पुरे ।। २२

प्रतिष्ठाने हरिद्वारे ज्वालावक्त्रे च यो वसेत् ।
नैमिशे भारते वर्षे वसेदेकाहवर्जनम् ।। २३

तस्यैव जायते श्रद्धा . . . . . . . . . . ।
दक्षिणस्यामपि दिशि मम क्षेत्राणि भूरिशः ।। २४

तेषु स्थानेषु नियतं वसतोऽस्य रुचिर्भवेत् ।
सह्यापगातटे पुण्ये शितिकण्ठे वसेन्मुने ।। २५

तृणज्योतौ गजारण्ये धृतस्ताने द्रुतीश्वरे ।
अरुणाद्रौ च वृद्धाद्रौ अभ्रगोष्ठ्यां श्वगोनगे ।। २६

कालहस्तिगिरौ पुण्ये वसतो मम वै मुने ।
मुने पञ्चनदे पुण्ये कुम्भघोणेऽर्जुने तथा ।। २७

श्वेतकान्तारके वापि तथा मायूरके मुने ।
छायावने बिल्ववने तेजिनीविपिने मुने ।। २८

वेदारण्येऽब्जसदने हालास्ये गन्धमादने ।
वसतः क्षेत्रवर्येषु तत्रान्यत्रोदितेषु च ।। २९

तस्यैव जायते श्रद्धा . . . . . . . . . ।
सर्वक्षेत्रेषु वसतो विमुक्तिदमिदं मम ।। ३०

अविमुक्तं न मुक्तं मे यतोऽतीव सुदर्लभम् ।
तत्रैवामरणं जन्तुःवसन् मुक्तिं परां व्रजेत् ।। ३१

सर्वक्षेत्रनिवासस्य विमुक्तिस्त्वन्तिमं फलम् ।
सेवतस्तारकं मन्त्रं तारशाम्भवसत्तमे ।। ३२

ददामीति प्रतिज्ञातं मया पूर्वं मुनीश्वर ।
यदि तत्र व्रतं पुण्यं लिरोव्रतमिदं मुने ।। ३३

कृत्वायुतैर्जन्मशतं पापान्मुक्तो न संशयः ।

**मङ्कण उवाच -**

कथं तद्व्रतमाख्याहि येन चीर्णेन शङ्कर ।। ३४

*तव ज्ञानोदयः शम्भो पशुपाशच्छिदो भवेत् ।
अविमुक्ते करिष्यामि व्रतं ते करुणानिधे ।। ३५

विधेहि करुणां विभो तव निधेहि पादाम्बुजं
मुदे हि मम साम्प्रतं तव भवाघपादे रतम् ।
अवेहि शरणागतं भवदवाब्धिमध्यं गतम् ।
प्रसादसुमुखागतं वद मुदे हितायाधुना ।। ३६

---

* त्वत्सम्बन्धिज्ञानस्योदयः

स तदा फणिकङ्कणोऽथ मङ्कणं
 ह्यनुगृह्याह विभूतिभूषणम् ।
शरणं करणं मुदा तदेश-
 श्चरणं तन्नख(व)चन्द्रभूषणम् ।। ३७

**ईश्वर उवाच -**

तवादेयं मेयं नहि मम मुनेऽत्रास्ति विशयः
 शपे शक्तेर्ज्यायान् भव भुवनमायाविरहितः ।
त्वया सर्वे धन्या मम हृदयमान्या मुनिगणाः
 सदा वन्याः सन्यासिन इह भवे न्यूनरहिताः ।। ३८

पञ्चब्रह्म मनुप्रभाव भसितं सिञ्चान्निजाङ्गे सदा
 मुञ्चेदेव हि पातकं स गिरिजे किञ्चित्तथा संसृतेः ।
अञ्चन् फालतले त्रिपुण्ड्रमथवै सङ्कोचभावोज्झितं
 तं चाप्यन्वहमेकमञ्चकगतं कुर्वेऽहमत्यादरात् ।। ३९

।। इति श्रीशिवरहस्ये दशमांशे
द्वादशोऽध्यायः ।।



## ।। त्रयोदशोऽध्यायः ।।

**स्कन्द उवाच -**

शिरोव्रतविधानस्य कालदेशानुसिद्धिदम् ।
कथयिष्ये समासेन शिष्यभूतस्य वै मुने ।। १

विशिष्य मम भक्तस्य गोप्यं न मम विद्यते ।
यस्य मेऽनुग्रहो नित्यं तस्य व्रतविधौ मुने ।। २

भविष्यति पराबुद्धिः पशुपाशविमुक्तये ।
यं मोचयामि भवगं तस्यैषा मतिरुद्भवेत् ।। ३

बहुजन्मसु विप्रेन्द्र भ्रान्तो मोहवशङ्गतः ।
ममैव कृपया लोके ब्राह्मण्यं लभते नरः ।। ४

ब्राह्मणेषु च विद्वांश्च ततो मद्भक्तितत्परः ।
सारासारविचारज्ञस्तस्य व्रतविधौ मतिः ।। ५

ममैवानुग्रहात्कश्चित् जिज्ञास्यति व्रतं परम् ।
तेन चीर्णेन तीर्णोऽसावसारो भवसागरः ।। ६

सुगमा निगमास्तस्य भविष्यन्ति मुने सदा ।
अधीत्यापि च वेदान्ताञ्छतकृत्वोऽन्तिके गुरोः ।। ७

स शब्दार्थज्ञो भवेत्किन्तु *नापरोक्षमवाप्नुयात् ।
सन्न्यासी वा गृहस्थो वा गुरुशिष्यावुभावपि ।। ८

---

* नानुभूतिमवाप्नुयात् । अपरोक्षं = अपरोक्षज्ञानं

वृथाश्रमं गच्छतस्तौ व्रतसिद्धिविवर्जितौ ।
श्रवणेनापि बहुधा न लभ्योऽहं व्रतं विना ।। ९

तस्माद्व्रतविधिं कृत्वा भवबन्धाद्विमुच्यते ।
ज्ञानाङ्गमेतदुत्कृष्टं शिरोव्रतसमाह्वयम् ।। १०

कृत्वैवाभ्यस्य वेदान्तान्मुक्तिमाप्नोति शाश्वतीम् ।
यथा देवेषु सर्वेषु महादेवोऽहमेव हि ।। ११

ज्ञानाङ्ग *साधनोपायमिदं श्रेष्टतरं मुने (?)
यथैव स्त्रीषु सर्वासु पार्वती परमा मता ।। १२

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
कर्मदेवेषु नियतं यथा श्रेष्ठो हरिर्विधिः ।। १३

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा नदीषु सर्वासु गङ्गा श्रेष्ठा सरिद्वरा ।। १४

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा क्षेत्रेषु सर्वेषु ह्यविमुक्तं विमुक्तिदम् ।। १५

ज्ञानाङ्गसाधनोपायमिदं श्रेषेठतरं तथा ।
यथा मद्भूषणं श्रेष्ठं रुद्राक्षं ज्ञानसिद्दिदम् ।। १६

यथा मन्त्रेषु सर्वेषु मम पञ्चाक्षरो वरः ।
यथा देवेषु सर्वेषु श्रीरुद्रः परमो मतः।। १७

---

* ग्रन्थेऽस्मिन् नियत लिङ्गशब्दप्रयोगविषये बहुत्रानादरो दर्शितः इत्यत्र बहून्युदाहरणानि वर्तन्ते ।

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा स्थानेषु पूज्येषु लिङ्गं पूज्यतमं मम ।। १८

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथैव सर्वपुष्पेषु बिल्वं प्रियकरं मम ।। १९

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा पूज्यासु वेलासु प्रदोषो मम तुष्टिदः ।। २०

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
नक्तव्रतेषु सर्वेषु सोमवारो यथा मम ।। २१

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा पर्वस्वपि सदा भूतकालाष्टमी प्रिया ।। २२

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा वर्णेषु सर्वेषु शाम्भवः प्रियसत्तमः ।। २३

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा चतुष्पदां मुख्या गौः श्रेष्ठा पावनी सदा ।। २४

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा सर्वामरश्रेष्ठो महेन्द्रः पाकशासनः ।। २५

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथा सर्वमुनिश्रेष्ठो दधीचो मम भक्तिमान् ।। २६

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . |
यथैव पततां श्रेष्ठो गरुडो वेगवत्तरः ।। २७

ज्ञानाङ्गसाधनोपाय . . . . . . . . . . . ।
यथा यक्षाधिपश्रेष्ठः कुबेरस्त्र्यक्षपूजकः ।। २८

यथा वृक्षेष्वसौ बिल्वो वृक्षाणां मम तुष्टिदः ।
किमत्र बहुनोक्तेन ज्ञानाङ्गं व्रतमुत्तमम् ।। २९

व्रतं पाशुपतं श्रौतं अथर्वशिरसि स्थितम् ।
देशकालौ विदित्वाथ स्वस्य भक्तिं निरीक्ष्य च ।। ३०

आपूर्यमाणे शशिनि पुण्ये चैवोत्तरायणे ।
आर्द्रायां च चतुर्दश्यां अष्टम्यां वा समाहितः ।। ३१

चित्रायां (चित्रया) पौर्णमासि वा मुखमेतद् द्विहायने ।
नदीतीरे शिवक्षेत्रे प्रागुदक्प्रवणां शुभाम् ।। ३२

शालां निर्माय तदनु वितानाद्यैरलङ्कृताम् ।
पुष्पैर्धूपैश्चदीपैश्च कदलीस्तम्भकुम्भकैः ।। ३३

पल्लवोर्ध्वमुखे तत्र रङ्गवल्याद्यलङ्कृते ।
व्रतनित्यसमाचारो ब्राह्मणैः शाम्भवैः सह ।। ३४

स्नात्वा शुक्लाम्बरधरो मां सम्पूज्य गणाधिपम् ।
नान्दीश्राद्धं ततः कृत्वा वेदवेदाङ्गपारगम् ।। ३५

आचार्यं वरयेद्विप्रं भस्मरुद्राक्षभूषितम् ।
दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च ।। ३६

प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ।
ध्यात्वा मां चैव गिरिजां स्कन्दुविघ्नेश्वरावुभौ ।। ३७

व्रतमेतत्करोमीति सङ्कल्प्य त्रिः पिबेदपः ।
शाम्भवांश्चाप्यनुज्ञाप्य तान् यथाशक्ति तोषयेत् ।। ३८

यावच्छरीरपातं वा द्वादशाष्टसमा अपि ।
तदर्धं वा तदर्धं वा मासद्वादशकं तु वा ।। ३९

तदर्धं वा तदर्धं वा मासमेकमथापि वा ।
दिनद्वादशकं वापि दिनद्वित्र्येकमेव वा ।। ४०

अग्निमाधाय विधिवत्स्वसूत्रोक्तेन वर्त्मना ।
विरजामन्त्र संसिद्धैर्मन्त्रैः सञ्जुहुयाद् घृतैः ।। ४१

चरुणास्वयमाचार्यो ब्रह्माणं तत्र कल्पयेत् ।
मन्त्रैः स विरजैर्हुत्वा स्वयं च विरजो भवेत् ।। ४२

अथ गोमयमादाय पूर्वोक्तेनैव वर्त्मना ।
संलिप्य गन्धसलिलैर्गन्धद्वारेति मन्त्रतः ।। ४३

न्यस्याग्नौ पञ्चब्रह्माद्यैः *करीषैश्चाच्छाद्य चांनलम् ।
घृताहारी हविष्याशी नक्तं भक्तो यतव्रतः ।। ४४

पयो ब्राह्मणपूर्वं वा क्षत्रियाद्यान् श्रुतिक्रमात् ।
द्वादशे तत्रदिवसे होमशेषं समापयेत् ।। ४५

शिखाजटस्त्वेकजटो जटी वा स शिखोऽथवा ।
काषायवसनो वाऽथ चीरवल्कलधार्यपि ।
तान्युद्धृत्य तदा पात्रे भस्म पिण्डादिकं क्रमात् ।। ४६

---

* करीष =Dry cow-dung.

सद्योजातादिपञ्चाद्यैः सम्पूज्यादौ त्रियम्बकैः ।
प्रक्षाल्य पाणी चरणौ त्रिराचामेच्छिवं स्मरन् ।। ४७

सङ्कलीकृत्य तद्भस्म विरजानलसम्भवम् ।
आग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् ।। ४८

विमृज्याङ्गानि मूर्धान्तं चरणाद्यानि संस्पृशेत् ।
यतिस्तु प्रणवेनैव सर्वेषां च यथाक्रमम् ।। ४९

ततस्त्रिपुण्ड्रं रचयेत् त्रियायुषसमाह्वयम् ।
शिवभावं समागम्य शिवयोगमिदं मुने ।। ५०

कुर्यात् त्रिसन्ध्यमप्येतत्पशुपाशविमुक्तये ।
आदेहपातमेतद्वै चरन् पाशुपतं व्रतम् ।। ५१

स मुक्तो मोचयेदन्यान् स्वदृष्टिपथगोचरान् ।
तदलाभे द्वादशाब्दं वत्सरं वा दिनत्रयम् ।। ५२

दिन द्वादशकं वापि स तु वै नैष्ठिकव्रतः ।
अत्याश्रमी स विज्ञेयो यो देहान्तावसनभृत् ।। ५३

स एव तपतां श्रेष्ठः स एव च महाव्रती ।
न तेन सदृशः कश्चित्कृतकृत्यो मुमुक्षुषु ।। ५४

वर्णी वाथ गृही वान्यो यतिः क्षत्रियवैश्यकः ।
व्रतं पाशुपतं कृत्वा मम ज्ञानमवाप्नुयात् ।। ५५

अन्यच्च कर्तुर्यत्पुण्यं व्रतेनानेन सिद्धिदम् ।
तस्याविमुक्ते देहान्तः प्रसादान्मे भविष्यति ।। ५६

किमत्र बहुननोक्तेन ज्ञानाङ्गमिदमेव हि ।
सर्वैर्मुमुक्षुभिः सेव्यः सत्यं सत्यं मयोदितम् ।। ५७

अथर्वसर्वस्वमिदं शिरोव्रतं
शर्वप्रियं पर्वतराजनन्दिनि ।
अखर्गपापाद्रि महाघगर्वहृत्
सर्वार्थदं चापरिमेयतुष्टिकृत् ।। ५८

कैवल्य श्रुतिवल्लरीकुसुमित श्रीपल्लवोल्लासि य-
न्मध्याह्नार्चन रुद्रसूक्तजपतो भस्म स्मारिप्रियम् ।
यन्मुक्तिप्रदभक्तिसूक्तिपरमं पुण्याविमुक्तिंप्रदं
तन्मोदाय हि मे भवेच्च परमानन्दं प्रिये शाश्वतम् ।। ५९

बृहज्जाबालोक्तश्रुतिविहितभस्माक्षविधृतिः
परं निर्वाणाय प्रकथितमहो शैलतनये ।
तदुक्तं तन्मुक्त्यै प्रभवति विशेषेण मनुजै-
र्द्विजैः संसेव्योऽयं श्रुतिविहितमार्गो हि सुगमः ।। ६०

भूत्यै प्रमादो न विधेय इत्युमे
ते तैत्तिरीया हि समामनन्ति ।
कालाग्निरुद्रा अपि सङ्गिरन्ति
श्रुतेर्गिरा भस्मधृतिप्रभावम् ।। ६१

।। इति श्रीशिवरहस्ये दशमांशे
त्रयोदशोऽध्यायः ।।



## ।। चतुर्दशोऽध्यायः ।।

**ईश्वरः उवाच -**

भस्माधिकारसम्पत्तिं धारणे पात्रमप्यहो ।
अधिकारिविवेकेन प्रवक्ष्यामि निबोध मे ।। १

ब्रह्मचारी गृही वन्यः सन्न्यासी मत्परायणः ।
धृत्वा वा धारयन्वापि दृष्ट्वा स्पृष्ट्वापि तं नरम् ।। २

निन्दन् मुदं प्रपद्यन्वा (?) सद्यो याति कृताकृतम् ।
धृतत्रिपुण्ड्रो यः कोवा स एवाहं मुने सदा ।। ३

मां यो वेद स वै देवो मां यो द्वेष्टि स दुर्भगः ।
भस्मस्नानरतं दृष्ट्वा प्रणमेन्मां यथा तथा ।। ४

भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसङ्गमात् ।
तस्मात्सर्वेषु कालेषु वीर्यवान् भस्मसंयुतः ।। ५

अग्नीषोमात्मकं चैव जगत् स्थिरचरं मुने ।
भस्मना लेपितं चाङ्गे जगत्तेन धृतं भवेत् ।। ६

अग्नीषोमतनुं कृत्वा न स भूयोऽभिजायते।
भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।। ७

भस्मशायी च पुरूषो रुद्राध्यायी त्रिपुण्ड्रधृक् ।
भूतप्रेतपिशाचाद्या रोगाश्चातीव दुःसहाः ।। ८

भस्मनिष्ठस्य सान्निध्याद्विद्रन्ति यथातथम् ।
भस्मप्रीतियुतो मर्त्यो दुर्लभो भुवने मुने ।। ९

यत्र कुत्र स्थितं भस्म लेपयन् भक्तिभाग्भवेत् ।
भासकं भसितं प्रोक्तं *भस्म कल्मषभक्षणात् ।। १०

भूतिर्भूतिकरी प्रोक्ता रक्षा रक्षाकरी मुने ।
क्षरणात्पापजालानां क्षारमेतत्प्रगीयते ।। ११

भस्मनः पञ्चनामानि श्रुतिगीतानि ते मुने।
उक्तानि मुक्तिदायीनि श्रद्धयैव निशामय ।। १२

भस्मस्नानेन यावन्तः कणाः स्वाङ्गे प्रतिष्ठिताः ।
तावन्तः शिवलिङ्गानि तनौ धत्ते मुनीश्वर ।। १३

कणानां सङ्ख्यया तस्य सदा तत्पितरोऽखिलाः ।
नरकस्था दिवं यान्ति दिविष्ठा मम लोकगाः ।। १४

अधिकारिविधिं चापि मुने समवधारय ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वापि च सङ्करः ।। १५

स्त्रियोऽथ विधवा बाला व्रात्याः पाषण्डिनस्तथा ।
ब्रह्मचारी गृही विप्रसन्यासी वा व्रती तथा ।। १६

धृतभस्मा त्रिपुण्डराङ्को मुक्त एव न संशयः ।
अधिकारी निगदितो मुने ते भस्मधारणे ।। १७

फलाफलं प्रवक्ष्यामि शृणुष्वैकमना मुने ।
यच्छ्रुत्वा महदाप्नोति पुण्यं मत्पदभावनः ।। १८

---

* भस्मना सकलपापानामपि नाशो भवतीत्यतो भस्मनो भासकत्वम् ।

यत्कृतेन कृतं सर्वं ज्ञात्वा स्नायेत (स्नायाच्च) भस्मना ।
ज्ञानाज्ञानधृतो वापि वह्निदाहे समो यथा ।। १९

ज्ञानाज्ञनधृतं भस्म पावयेत्पावनं परम् ।
पुरा कैलासशिखरे देव्यै प्रोक्तो मया विधिः ।। २०

तत्तेऽद्य कथयिष्यामि त्वं मे शिष्यो विशेषतः ।
शृणुष्व त्रिदशैरेभिर्मद्गणैर्मुनिभिः सह ।। २१

निःसंशयो विधिरयं सर्वेषां सर्वदा मुने ।
सर्वपापप्रशमनं सर्वपुण्यविवर्धनम् ।। २२

न स्नानशौचाचमनक्रियाभिः
शुध्येत नान्यैर्विधिभिः समस्तैः ।
भस्मत्रिपुण्ड्रोज्झितफालगात्रो
न पात्रमामुष्मिकपुण्यहेतौ* ।। २३

त्यक्तध्यानमदर्चनस्तुतिकथासन्ध्याविधिश्चाप्युमे
भस्माभ्यक्ततनुर्धुनोति सकलं पापं त्रिपुण्ड्राङ्कधृत् ।
सन्ध्याहोमजपार्चने पितृविधौ तीर्थे तथा तर्पणे
रुद्रावर्तनपञ्चवर्णकमनोर्जापी स एवोत्तमः ।। २४

फाले शिरोजनितपापततिं निहन्ति
वक्षोधृतं च परतल्पगपापसङ्घम् ।
बाह्वोर्धृतं भसितमेव हि तत्कृताघं
सर्वाङ्गलेपितमुमे सकलं निहन्यात् ।। २५

---

* आमुष्मिकपुण्यकारणविषये सत्स्वपि भूयिष्ठेषु कारणान्तरेषु त्यक्तत्रिण्ड्रभस्मा पुरुषः अनधिकार्येव भवति ।

कीलालं विमलं विभूतिजनितं हस्तोज्झितं तत्पिबे-
न्नाधस्त्याज्यमिदं त्रिपुण्ड्ररचनोच्छिष्टं महाघौघहम् ।
पापानां परिमोचनाय गिरिजे ह्यापः पुन्तीत्यसौ
मन्त्रः पात्रतमं करोति सुहितं त्वेतत् त्रिणेत्रप्रियम्।।२६

कालत्रयेऽपि निशि धार्यमुमे त्रिपुण्ड्रं
केचिन्निशासु परिधूलनमानमन्ति ।
तन्न प्रशस्तमिदमेव सदा विधेयं
धार्यं त्रिपुण्ड्रमखिलैर्मम शासनं हि ।। २७

दृष्टादृष्टकरं सदा धृतमुमे दृष्ट्वाप्यारिष्टं मुदा
धार्यं भस्म समन्त्रकं प्रविलयं दुःस्वप्नमेव व्रजेत् ।
स्पष्ट्वाऽस्पृश्यं अथापि निन्द्यसुमहापापान्त्यजस्पर्शनं
कृत्वा पूततरो भवेच्च भसितं पापौघतापौघभित् ।। २८

पर्वस्वप्यविशेषतो द्विजवरैर्धार्यं त्रिपुण्ड्रात्मना
नित्यादप्यधिकं (फलं) लभेत स शिवे पूर्णेन्दुसूर्यग्रहे ।
सङ्क्रान्तावयने द्वयोरपि सदापाते स पापौघभि-
द्भूयादेव स पुण्यपण्यपरमानन्दैकमोदैकभूः ।। २९

।। इति श्रीशिवरहस्ये दशमांशे
चतुर्दशोऽध्यायः ।।



## ।। पञ्चदशोऽध्यायः ।।

**मुनिः (उवाच) -**

कुमार सुकुमाराङ्ग मारमारप्रिय प्रभो ।
वारं वारं प्रपद्येऽहं शूरहारिपदाम्बुजम् ।। १

श्रुतं मङ्कणकाख्यानं भस्मनो महिमापि च ।
शिरोव्रतविधिश्चैव शिवप्रोक्तो विशेषतः ।। २

श्रुतं विश्रुतमाख्यानं श्रुतिप्रोक्तं सदाऽद्भुतम् ।
कथं रुद्राक्षमहिमा तन्मे विस्तरतो वद ।। ३

निस्ताराय भवाम्भोधेर्धारणेन जनार्दन ।
कथं रुद्राक्षवृक्षाणामुत्पत्तिः को विधिः फलम् ।। ४

धारणं वा कथं तस्य महामायात्मजान्तक ।
किमुक्तवान्महादेवो देव्यै रुद्राक्षजं फलम् ।। ५

धारणे चाधिकारी कस्तन्मे स्कन्द वदाधुना ।

**सूत उवाच -**

इति वाक्यं मुनेः श्रुत्वा क्रौञ्चारिस्तमभाषत ।। ६

पुरा कैलासशिखरे यत्पृष्टं शैलकन्यया ।
देव्यै देवेन कथितं तद्वै वच्मि कथानकम् ।। ७

**स्कन्द उवाच -**

शृणु त्वं गणबृन्दैश्च सुरवृन्दैर्मुनीश्वरैः ।
कैलासशैलप्राकारे चन्द्रस्फटिकनिर्मले ।। ८

देवी कान्ततरं कान्तं चन्द्रपोतमनोहरम् ।
स्मयमानमुखाम्भोजषट्पदीकृतमानसा ।।९

सस्मितास्यं रहस्येवमपृच्छत्पर्वतात्मजा ।
दिव्यासने समाविष्टं शिपिविष्टं तमम्बिका ।। १०

**देवी उवाच -**

रुद्राक्षमहिमा शम्भो न श्रुतो विस्तरान्मया ।
तन्मे कौतुकमुत्कृष्टं श्रोतुं तन्महिमां(?)विभो ।। ११

तवामृतमुखाम्भोज चञ्चरीकायते मनः (?) ।
कथासुधारसं पातुमिच्छा स्वच्छास्ति मे शिव ।। १२

रहस्यमपि मे ब्रूहि सावधानास्मि साम्प्रतम् ।

**स्कन्द उवाच -**

इत्युक्तं गिरिजावाक्यं श्रुत्वा चन्द्रकलाधरः ।। १३

प्रहस्याह महादेवः कैलासे गिरिजां तदा ।

**ईश्वरः उवाच -**

शृणु त्वमगजे जाये फुल्लहल्लकगन्धिनि ।। १४

धम्मिल्लमल्लीविमलगन्धबन्धकचे शिवे ।
रौच्ये* मनोरन्तरे ते दितिजा वरदर्पिताः ।। १५

कश्यपस्यान्वये जाता महाबलपराक्रमाः ।
देवाञ्जिग्युश्च सङ्ग्रामे तेऽसकृन्मत्परायणाः ।। १६

---

* रौच्ये मनोरन्तरे - देवसावर्णिमन्वन्तरे

ब्रह्मविष्ण्वादयो देवास्तैर्जिता बलवत्तरैः ।
ऐरावतसमारूढः सुरबृन्दैः पुरन्दरः ।। १७

रणे निराकृतो दैत्यैर्मद्दत्तवरदर्पितैः ।
विध्वस्ता मुनयः सर्वे लोकाश्चैव चतुर्दश ।। १८

अधरोत्तरमुद्‌भ्रान्तं जगच्चक्रुर्बलोद्धताः ।
यज्ञभागभुजः सर्वे कृतास्ते बलिभोजनाः ।। १९

पितरः कातरा जाता मरुतो मरुतोऽभवन् ।
वसवश्चासुभिर्हीना वायुरायुर्निराश(?)वान् ।। २०

गोविन्दो मन्दगर्वीऽभूद्(?)ब्रह्माऽजिह्मत्वमाप्तवान् ।
आदित्या वसुमत्यां हि विचरन्ति पृथग्जनैः ।। २१

विश्वासहीनो भगवान् विश्वेदेवास्तदाऽबलाः ।
रुद्रा दरिद्रा ह्यभवन्मार्तण्डा मूढतां गताः ।। २२

यक्षाश्च ध्वंसिता दैत्यैर्ध्वाङ्क्षा इव महाबलैः ।
समीरणोऽथ वरुणो रणे दैत्यैः पराजितौ ।! २३

अश्विनौ श्वासहीनौ तौ कान्दिशीकौ दिशासु वै ।
कृशः कृशानुरेताश्च गन्धर्वा धैर्यवर्जिताः ।। २४

मुनयो मनवश्चैव वामनाः प्राद्रवंस्तदा ।
अपसर्पन्ति सर्पास्ते दैत्यभीत्या दिशोदश ।। २५

दिशागजा मदोद्धूता मदधाराविवर्जिताः ।
तर्जिताः पर्वताः सर्वे पक्षगर्वविवर्जिताः ।। २६

वेदा निर्वेदमापन्नाः शक्रस्तक्रमयाचत ।
दीना हीनबलाः सर्वे सुरा दैत्यपराजिताः ।। २७

प्रणवः प्राणहीनोऽभूत्कुबेरो बेरवर्जितः ।
त्रिविष्टपनिविष्टा ये ते भूमौ कष्टजीविनः ।। २८

एवं ब्रह्माण्डमुद्भ्रान्तं दैत्यदण्डेन पीडितम् ।
निःस्वाध्यायवषट्कारं सदा मखमुखोज्झितम् ।। २९

लेखदुःखप्रदं चैव जगदासीच्चराचरम् ।
सन्तप्ता व्यथिताश्चैव गीर्वाणाश्चर्णवं गताः ।। ३०

सागरा गरवेगेन बडवाग्निमुखेऽर्पिताः ।
न वाति वातपोतोऽपि दैत्यभीत्याऽनिशं शिवे ।। ३१

अग्निरूर्ध्वशिखश्चापि विशिखश्चाप्यधःशिखः ।
विद्युतो द्युतिहीनाश्च सोमो म्लानवपुर्धरः ।। ३२

चण्डरश्मिर्मन्दरश्मिरभूद्दैत्यपराजितः ।
क्रूराक्षेणापि ते देवि ताराक्षेण पराजिताः ।। ३३

ताराभाराइवापेतुर्मकराक्षेण पीडिताः ।
कल्पवृक्षाः क्षितितले समानीताश्च नन्दनात् ।। ३४

बलवद्विकृतं लोकं(?) तदा विद्युत्सुमालिना ।
एवं क्रूररणक्षोण्यां बाणासिपरिधैः शरैः ।। ३५

ऐरावतो रावितश्च शक्रो विक्रमवर्जितः ।
असकृत्तर्जिता देवा जगच्चक्रं च भर्जितम् ।।३६

न वीर्यवीर्याः सर्वेऽपि आर्यधर्मविवर्जिताः ।
तत्र देवैःस्तुतो देवि ब्रह्मविष्णुपुरोगमैः ।। ३७

त्रिपुराणां वधार्थाय मतिं कृत्वाऽहमास्थितः ।
ब्रह्मादिस्तुतितोषितोऽहमगजे त्रैलोक्यरक्षाक्षमैः
मन्नेत्रप्रभवाश्रुभिः प्रभविता रुद्राक्षवृक्षाः क्षितौ ।
द्वात्रिंशत्प्रभवा भवन्ति नियतं तद्बीजमेवामले
धार्यं वैदिकसम्मतं श्रुतिशिरोवार्तासु निर्वर्तितम् ।। ३८

त्र्यक्षानुक्षण वीक्षणेन भगदृक्सन्धुक्षलिङ्गार्चको
रुद्राक्षोरुवलक्षदिव्यभसितालङ्कारपुण्ड्राङ्क धृक्
पापध्वाङ्क्षनिवारणाय सकरासङ्गाश्मसङ्क्षेपको
मोक्षश्रीकरसङ्गसम्भवमहानन्दाम्बुपानोद्यतः ।।

।। इति श्रीशिवरहस्ये दशमांशे
पञ्चदशोऽध्यायः ।।



## ।। षोडशोऽध्यायः ।।

**देव्युवाच -**

एतादृशबलैर्युक्ताः कथमासन् दितेः सुताः ।
किं तप्तं तैस्तपो देव त्वत्प्रीतिजनकं महत् ।। १

तन्मे वद विशेषेण दितिजानां विचेष्टितम् ।
श्रवणेन धृतं शम्भो तन्मह्यं वक्तुमर्हसि ।। २

**स्कन्द उवाच -**

इत्थं देव्या तदा पृष्टः शङ्करः करुणाकरः ।
तां प्राहाथ तपश्चर्यां दैत्यानां परमाद्भुताम् ।। ३

**ईश्वर उवाच -**

श्रृणु देवि विशालाक्षि *द्विजातीनां विचेष्टितम् ।
तैर्यत्तप्तं तपो घोरं न तथा सुरसत्तमैः ।। ४

मुनिभिर्गणबृन्दैश्च तन्मत्तः श्रोतुमर्हसि ।
ताराक्षो मकराक्षश्च विद्युन्माली च ते त्रयः ।। ५

त्रेताग्निवर्चसः सर्वे बलस्यैव तनूभवाः ।
भवपादाब्जसंसक्तास्त्रिपुण्ड्रपरिशोभिताः ।। ६

रुद्राक्षहारवलयास्ते ह्यासन् करुणालयाः ।
शिवलिङ्गार्चनासक्ताः सर्वदा बिल्वपल्लवैः ।। ७

बले हते तदेन्द्रेण तत्पुत्रास्ते त्रयोऽम्बिके ।
शुक्रं वै शरणं याता रणे सुरपराजिताः ।। ८

---

* दितिजानां इत्यर्थे

प्रणम्य काव्यं दितिजा दुःखभारानताननाः ।
प्रोचुर्वृत्तान्तमखिलं [1]तत्पितुर्मरणं रणे ।। ९

**दैत्या ऊचुः -**

देवैः पराजिताः सर्वै दैत्या वात्याहता इव ।
बलिश्च बलिनां [2]श्रेष्ठो निहतो रणमूर्धनि ।। १०

शरासारैश्च लगुडैः खड्गकेटधरैः सुरैः ।
विप्रद्रुतबलाः सर्वे हतनाथा हतौजसः ।। ११

कान्दिशीका न्यस्तशस्त्रास्त्वामेव शरणं गताः ।
भवान् गुरुर्भवांस्त्राता भवपादार्चने रतः ।। १२

वदास्मभ्यं जयोपायं येन [3]जेष्याम्यहं सुराः ।

**सूत उवाच -**

स शुक्रो दैत्यवचनात् तानाहूयाथ सान्त्वयन् ।। १३

**शुक्र उवाच -**

यूयं दितिभवाः सर्वे सर्व एव महौजसः ।
सुरैर्विप्रदुता भीत्या वात्यापर्ण इवाहताः ।। १४

उपायं वोऽद्य वक्ष्यामि तच्छृणुध्वमतन्द्रिताः ।
पूजयित्वा महादेवं तपसाऽऽराध्य शङ्करम् ।। १५

तस्माल्लब्धवरा यूयं विजेष्यध्वे रणे सुरान् ।
आषाढार्चनयुक्तानां तुराषाडपि नो समः ।। १६

---

1. स्वपितुः 2. बलश्च
3. जेष्यामो येन वै सुरान् इति युक्तः पाठः ।

मवच्छिखरं गत्वा कन्दमूलफलाशनाः ।
भस्मरुद्राक्षसम्पन्नास्तपःकुरुत मा चिरम् ।। १७

भवतामचिरादेव वरं दास्यति शङ्करः ।
स्वर्ग्यं सन्तानमायुष्यं शङ्करस्यैव पूजनात् ।। १८

ब्रह्मत्वममरत्वं च शङ्करस्यैव पूजनात् ।
पशुपाश विमोक्षश्च शङ्कर . . . . . . . . . . ।। १९

विद्यासुखधनावाप्तिः शङ्कर . . . . . . . . . ।
विष्णुत्वं वासवत्वं च शङ्कर . . . . . .   ।। २०

दिक्पालत्वं मुनित्वं च शङ्कर . . . . . . . ।
गन्धर्वगरुडेशत्वं  शङ्कर . . . . . . .   ।। २१

यद्यद्विभूतिमत्सत्वं शङ्कर . . . . . . .   ।
तस्मात्पूजा*परं श्रेयो ददाति दितिजाः सदा ।। २२

गच्छध्वं द्रुतमत्युग्रं तपश्चरत सुव्रताः ।
शिवलिङ्गार्चका यूयं भस्मरुद्राक्षभूषणाः ।। २३

रुद्रपञ्चाक्षरावृत्त्या तोषयध्वं महेश्वरम् ।
इत्युक्तास्तेऽथ काव्येन नत्वा दुःखविवर्जिताः ।। २४

काव्यमप्यहतैश्वर्यं स्तव्यं स्तुत्वा दितेःसुताः ।
ययुः प्रालेयकगिरिं तपसे धृतनिश्चयाः ।। २५

रम्यं वृक्षशतोपेतं मृगपक्षिविराजितम् ।
सरोवरोरुसंराजत्सरोजोत्फुल्लहल्लकम् ।। २६

---

* फलं

तत्तीरे सरिदाभोगतरङ्गक्लिन्नमारुते ।
रुतैः [1]पक्षिनिकायानां वसन्तोत्फुल्लशाखिषु ।। २७

निरुध्य स्वम[2]नोदग्रमुग्रार्चनपरास्तदा ।
त्रिकालस्नानपरमा भस्मरुद्राक्षभूषणाः ।। २८

त्यक्तेषणास्त्रिषवणमुदकाप्लाविविग्रहाः ।
पञ्चाग्निनिरताः सर्वे मूर्ध्नि सूर्यकरार्दिताः ।। २९

हेमन्ते सरसि स्वच्छाः वर्षास्वभ्रावकाशकाः ।
कटधूमाशनाः सर्वे सूच्यग्रे समवस्थिताः ।। ३०

वायुपर्णाम्बु फलजच्छदभोजनकारिणः ।
शरणं प्रतिपन्नास्ते महादेवपदाम्बुजम् ।। ३१

प्रत्येकमेषां वर्षाणां सहस्राणि तपोरताः ।
निरूच्छ्वासपराः सर्वे स्थाणुवत्स्थाणुतत्पराः ।। ३२

तेषां तपस्यया तप्तैर्दैवैरुत्सादिताप्सराः ।
ते चाप्सरसवर्गाणां आलोकनविवर्जिताः ।। ३३

देवानां भयमातेनुर्दैत्यास्ते वै तपोरताः ।
तेषां तपो महद् दृष्ट्वा सुरा याताः पितामहम् ।। ३४

भीता दैत्यतपस्याभिः शरणं पद्मजं गताः ।
प्रोचुः प्राञ्जलयः सर्वे शक्रमुख्या दिवौकसः ।। ३५

---

1. शाखिषु कृतवसतीनां पक्षिणां रुतैः शोभिते इति पूरणम् ।
2. उदग्रं निरुध्य स्वमनः or निरुध्योदग्रं स्वमनः उग्रार्चनपरास्तदा ।

**देवा ऊचुः -**

बलपुत्राः सदा ब्रह्मन् तपोनिष्ठाः जितक्रुधः ।
तारक्षो मकराक्षश्च विद्यनमाली महाबलः ।। ३६

बलप्रमथनार्चातो महाबलपराक्रमाः ।
नास्माभिर्धर्षितुं शक्यास्तेषां चैव तपस्यया ।। ३७

सुराः सन्तापिता ब्रह्मन् तान्वरेणाभियोजय ।

**सूत उवाच -**

इत्थं गीर्वाणवचसा सहसा पद्मजस्तदा ।। ३८

ययौ हंससमारूढः सुरैर्दैत्यवरान्तिकम् ।
दृष्ट्वा दैत्यांस्तपोयुक्तानभ्यभाषत पद्मजः ।। ३९

भो भो दैत्यसुता यूयं मत्तः किमभिवाञ्छथ ।
भवतां तपसा तुष्टो वृणुध्वं वरमीप्सितम् ।। ४०

वाणीपतेस्तदा वाणीं श्रुत्वा ते दानवोत्तमाः ।
प्रणम्य पद्मजं प्रोचुः सुराणां पश्यतां शिवे ।। ४१

**दैत्या ऊचुः -**

स्वच्छन्दमरणं नोऽस्तु अवध्याश्च सुरैः सदा ।
अयोरजतहेमादिपुरं पक्षसमन्वितम् ।। ४२

पुराणि यत्र नो ब्रह्मन् गतिस्तत्र व्रजन्तु नः ।
यदा सर्वैः समेष्यामो यद्येकस्मिन् क्षणे विधे ।। ४३

एकेनैवेषुणा हन्यात्तदा नोऽस्तु वधो ध्रुवः ।
इति दैत्यवचः श्रुत्वा विधिस्तानभ्यभाषत ।। ४४

एष वोऽस्तु वरो दैत्या निवर्तध्वं तपोऽम्बुधेः ।। ४५

तथेति ते दैत्यसुता जहर्षु-
विधेः सुवाक्येन बलोन्नतिं गताः ।
पुराणि तेषां प्रबभूवुरम्बिके
मोदाय वृक्षाश्रयणानि तेषाम् ।। ४६

विधिः सुरैश्चापि जगाम लोकं
प्रतारिताश्चेति तदा सुरा जगुः ।
तदैव ते दैत्यसुता बलिष्ठा
जिग्युः सुरांश्चापि निजघ्नुरुद्धताः ।। ४७

हस्तन्यस्तोरुशस्त्रैः करमुखविधृतैः कार्मुकज्याविनिर्य-
द्धारासारशरावरैः सुरगणान् जघ्नुश्च ते वै रणे ।
सन्नद्धोद्धतबाहुदण्डविधृतैर्दण्डैश्च खण्डीकृता
मुण्डैः षण्डवराण्डभाण्डमसकृत्कुर्वन्ति सर्वे रणे ।।

।। इति श्रीशिवरहस्ये दशमांशे
षोडशोऽध्यायः ।।



## ।। सप्तदशोऽध्यायः ।।

**ईश्वर उवाच -**

ततो दैत्या मदाविष्टास्त्रिविष्टपनिवासिनाम् ।
मदं च दमयन्तस्ते स्वेनानीकेन दंशिताः ।। १

रणमूर्धनि ते दैत्या दैवतैः समयोधयन् ।
शस्त्रास्त्रदण्डपाषाणैर्मुसलैस्ते गदायुधैः ।। २

असिकुन्तहलैर्यन्त्रैर्बाणैर्बाणासनच्युतैः ।
धुरन्धरैः सिन्धुरैश्च चतुरङ्गबलैस्तथा ।। ३

हया हयैर्गजाश्चैव दन्तिभिश्च रथा रथैः ।
पत्तिनः(?) पत्तिभिः सार्धं कवचैः सुनिषङ्गिणः ।। ४

खड्गखेटधरा दैत्या सुराश्च युयुधुर्युधि ।
वसन्तसूर्योरुकर चाकचक्यासिभिर्मृधे ।। ५

मण्डलानि तदा चक्रुरसिविक्षेपणैस्तदा ।
शतं सहस्रं नियुतं अयुतं प्रयुतं तथा ।। ६

निजघ्नुः शरवर्षैस्तैरन्योन्यं तौ ततक्षतुः* ।
शराचिताङ्गसर्वस्वौ वसन्ते किंशुकाविव ।। ७

मकराक्षोऽथ युयुधे देवेन्द्रेण सुरैः समम् ।
दैत्याश्चोद्रिक्तशस्त्रास्ते ताराक्षेणाप्यपां पतिः ।। ८

युयुधे पाशसर्वस्वैर्वारुणैः स्वगणैः सह ।
मयूखमाली स तदा विद्युन्मालिनमाह्वयत् ।। ९

---

* विद्युन्माली च ताराक्षः -

निःसाणभेरीभङ्कारगर्जितानकगोमुखैः ।
तर्जिताम्भोनिधिरवैर्भीरूणां भयदायकैः ।। १०

गदानिपातशब्दैश्च कवचानां कचाकचैः ।
करिबृंहितयोधानां कूजतामितरेतरम् ।। ११

हयहेषितशब्दैश्च रथनेमिस्वनैस्तथा ।
खं द्यां भुवं च स तदा(निनदः)संरावोत्थस्तदारुणत् ।।१२

वसन्तार्ककरासार प्रविद्युदसिभिः स्फुटैः ।
वर्षासु शलभोत्तुङ्गसङ्घावृतनभो यथा ।। १३

तथा शरासारपारं नभोऽभूद्दैत्यदारुणम् ।
अन्योन्यमत्सराराव कनकत्सरु सत्करैः ।। १४

मण्डलीकृतकोदण्डपुरुकाण्डशरैर्वरैः ।
कङ्कत्रक्षमहायक्ष लक्ष्यीकृतशरैःसुराः ।। १५

नाराचैर्वत्सदन्तैस्च क्षुरप्रैः प्रेक्षिताङ्गकाः ।
विपाठ पाटितोरस्कान्दैत्यांश्चैव सुरांस्तथा ।। १६

नाराचोत्सन्नकवचा वत्सदन्तैश्च दंशिताः ।
निजघ्नुः शरवर्षैस्ते स्वमर्मसु मुमूर्षवः ।। १७

अन्योन्यं चिच्छिदुर्बाणैः शतशोऽथ सहस्रशः ।
मकराक्षः सहस्राक्षं विव्याध निशितैः शरैः ।। १८

करटीकटभागे च शतेनानतपर्वणाम् ।
कुम्भान्तरे सहस्रैश्च दन्तवेष्टैः शतोत्तरैः १९

नखसन्धिषु सर्वेषु करीन्द्रं समवाकिरत् ।
निजघान सदैत्येन्द्रस्तमिन्द्रमपि सत्तमाः । २०

इन्द्रोऽपि मकराक्षं तं शरैर्विव्याध सप्तभिः ।
(वक्षसि सक्थ्नि तथा मुष्टौ)
वक्षः सक्थ्नि तथा मुष्टौ कवचेऽपि शतं शरैः ।। २१

धनुर्ज्यामच्छिनत् सद्यो यन्तारं तरसा रणे ।
रथे ध्वजे च कवचे योक्त्रेऽथ गजसारथौ ।। २२

पातयन्तः शरासारमन्योन्यं ते सुरासुराः ।
मयूखमालिनं चापि विद्युन्माली तदाच्छिनत् ।। २३

शरासारैदिनाधीशं प्रावृट्कालपयोदवत् ।
तथाऽर्कोऽपि तदा च्छन्नोऽप्यच्छिन्नो वार्षकालिकः ।। २४

न च व्यक्तं न चाव्यक्तं अभूत्तच्छरपीडितः ।
तद्रथे ध्वजवृन्दे च तद्वक्षसि हये तथा ।। २५

तद्यन्तरि शरासारमवर्षत्स्वकरच्युतैः ।
यथा सूर्यकरोत्सृष्टा वृष्टिः सस्याभिवृद्धये ।। २६

तद्दैत्यहयमुख्येषु पातयन् खण्डयन् रविः ।
केषाञ्चिद्बाहवः छिन्नाः शिरांसि व्यपतन् क्षितौ ।। २७

शिंशुमारोऽमरारीणां समरे सोऽरिमर्दनः ।
ताराक्षस्य महावक्षो विददार शितैः शरैः ।। २८

यन्तारं च स त्रिषष्ट्या सप्तत्या वाजिनस्तथा ।
सस्त्रुस्तत्र महावेगा असृग्घोराः सरिद्वाराः ।। २९

मेदोवसामांसपङ्के गजोरुपुलिनास्तदा ।
छत्रचामर फेनौघा भीरूणां भयवर्धनाः ।। ३०

एवं शतं ते वर्षाणि शरवर्षैः सुरासुरैः ।
(दैत्या रणे) युयुधुःसमरे दैत्या रक्षसामतिहर्षदाः ।। ३१

निजघ्नुः समरे देवा दैतेयान्विविधायुधैः ।
हस्तान्त्सहस्ताभरणानसिभिर्द्योतितप्रभान् ।। ३२

सकुण्डल शिरस्त्राणैरास्तृता रणभूरभूत् ।
गजानां च शरीरौघैर्हयैर्भग्नरथैस्तथा ।। ३३

पातयन्ति तदा दैत्या सुरांश्च दितिजान्त्सुराः ।
एवमन्योन्यमुद्भ्रान्तं तुमुलं रोमहर्षणम् ।। ३४

नृत्यत्कबन्धसङ्क्रान्त मुष्टीमुष्टि कचाकचि ।
युद्धं विध्वस्तदेवौधैर्भीकरं समपद्यत ।। ३५

सहस्त्रवारं देवानां दैत्यानां विष्टपाशया ।
ततस्ते विफला देवा पलायनपरायणाः ।। ३६

न्यस्तशस्त्राः क्षितितले तृणवक्त्रा हृतौजसः ।
विवाहानायुधाः सर्वे विस्त्रस्तमकुटास्तथा ।। ३७

धावन्त्यनभिवीक्षन्तः सुरास्ते मुक्तमूर्धजाः ।
हा कष्टमिति धावन्ति त्रिविष्टपनिवासिनः ।। ३८

स्थानानि तत्यजुर्भीता ब्रह्माणं शरणं गताः ।
दैत्यास्त्रिविष्टपगता नन्दने विहरन्ति ते ।। ३९

तदाप्सरोभिर्दिव्याभिः स्रक्चन्दनविभूषिताः ।
देवोपभोग्यं बुभुजुर्भोगं ते दैत्यनायकाः ।। ४०

शुक्रानुशासिताः सर्वे स्थिताः शक्रपदे तदा ।
दिक्पालपदवीं सर्वे शासन्तो बलवत्तराः ।। ४१

यज्ञभागभुजोऽभूवन् मुनीनां भयभावनाः ।
उद्वेजयन्तो लोकांस्त्रीन्बलवीर्यमदोत्कटाः ।। ४२

पपुः पानानि सोमेन मुनीनामाश्रमेषु च ।
पुराणि नृपतीनां ते स्वपुरः पातनेन वै ।। ४३

विनाशयन्ति ते दैत्या मत्ता ब्रह्मवरोद्धताः ।
देवा ब्रह्माणमाहुस्ते भयभीताः सवासवाः ।। ४४

निर्विण्णास्तेऽथ गीर्वाणा आतुरा दैत्यभीतितः ।
सास्त्राविलेक्षणा देवाः(?) प्रणतास्तेऽब्रुवन् विधिम् ।। ४५

**देवा ऊचुः-**

पितामह नमस्तेऽस्तु त्वद्वराद्दैत्यनायकैः ।
रणे पराजिताः सर्वे कथञ्चित्त्वां समागताः ।। ४६

भस्मरुद्राक्षयुक्ताङ्गाः स्वाङ्गैस्त्वामागता वयम् ।
स्थानानि चास्मदीयानि तैर्हृतान्येवमोजसा ।। ४७

चन्द्राग्न्यनिलवायूनां वस्वीशानमरुत्त्वताम् ।
इन्द्रदिक्पालसूर्याणां यक्षाणां सुरसत्तम ।। ४८

नन्दने विहरन्त्येव दैत्या यज्ञभुजः सदा ।
विहरन्त्यप्सरोभिस्ते देवभोग्यैर्महोत्सवैः ।।४९

शिवद्रोहः कृतः कोवा अस्माभिर्भोगतत्परैः ।
किञ्चास्माभिर्महादेवः प्रदोषे पूजितो न हि ।। ५०

न भूतिर्विमला फाले न धृताऽस्ति विधें किमु ।
रुद्राक्षधारणं पुण्यं विस्मृतो रुद्रजापकः ।। ५१

न च पञ्चाक्षरी जप्ता तत्फलं वा किमागतम् ।
किं कुर्मः शाधि नो ब्रह्मन् देवानां भयमागतम् ।। ५२

**स्कन्द उवाच -**

इति तद्वचनं निशम्य वेधाः
सुरवर्यानथ सान्त्वयन्नुवाच ।
भवतां भवपादसंश्रितानां
भयनाशं प्रवदामि सद्य एव ।। ५३

दितिजास्तपसा बलोन्नता
मम चैवाद्य वरेण शम्भुभक्त्या ।
प्रभवाम वयं च भूतिहेत्यै
शिवमेवाशु भजाम नो हिताय ।। ५४

इति सर्वामरसङ्घसंवृतो
मम कैलासवरं समाजगाम ।
मम गङ्गातटसीम्नि सङ्गतो
ह्यभजन्मां ससुरो मुदा विधिश्च ।। ५५

।। इति श्रीशिवरहस्ये दशमांशे सुरपराजयो नम
सप्तदशोऽध्यायः ।।



## ।। अष्टदशोऽध्यायः ।।

**स्कन्द उवाच -**

ततो ब्रह्ममुखा देवा बिल्वाद्यास्त्रिपुरार्दिताः ।
मामेव शरणं प्राप्ता मम कैलासभूधरे ।। १

शतं वर्षाणि ते देवास्तप्यन्ति परमं तपः ।
मद्दर्शनार्थमगजे भस्मरुद्राक्षधारणाः ।। २

मम लिङ्गार्चनव्यग्रा रुद्रपञ्चाक्षरादराः ।
ब्रह्मा ब्रह्मेश्वरे लिङ्गे विष्णुर्विष्णवीश्वरे तथा ।। ३

इन्द्रश्चेन्द्रेश्वरे देवि चन्द्रश्चन्द्रेश्वराभिधे ।
सूर्यः सूर्येश्वरे देवि वरुणो वरुणेश्वरे ।। ४

वस्वीश्वरेऽथ वसवो मरुतो मारुतेश्वरे ।
अग्निरग्नीश्वरेऽथ तत्र यमश्चापि यमेश्वरे ।। ५

नैर्ऋतेशे निर्ऋतिश्च ईशानो हीश्वरेश्वरे ।
अश्वीश्वरे ह्यश्विनौ तौ पितरः पैतृकेश्वरे ।। ६

ऋक्षेश्वरे च ऋभवो रुद्रा रुद्रेश्वरे तथा ।
मुनीश्वरेऽथमुनयो विश्वेदेवेश्वरे सुराः ।। ७

मत्कैलासे प्रतिष्ठाप्य लिङ्गान्येतानि शङ्करि ।
मणिसद्मागतान्येव कृत्वा पाशुपतं व्रतम् ।। ८

अग्निरित्यादिभिर्मन्त्रैर्धूलिताङ्गास्तदा सुराः ।
रुद्राक्षहारवलया रुद्रपञ्चाक्षरादराः ।। ९

ब्रह्मविष्णवादयो देवाः पूजयन्ति च मां सदा ।
पञ्चामृतैर्गन्धधूपपुष्पैर्नैवेद्यकल्पनैः ।। १०

बिल्वपत्रार्चनैश्चैव लिङ्गान्यभ्यर्च्य भक्तितः ।
स्तुवन्ति स्तुतिभिर्देवि तां स्तुतिं मे निशामय ।। ११

**ब्रह्मोवाच -**

भवभूतपते पिनाकपाणे
त्रिपुरग्रस्तमिदं हि नाकिजालम् ।
गरभक्षातुलचारुनेत्र दृष्ट्वा
अभिरक्षाद्य पदं तव प्रपद्ये ।। १२

**विष्णुरुवाच -**

मदनार्दन गाङ्गसत्कपर्द शम्भो
दुरितं मे शमयाशु चारुदृष्ट्या ।
परिहर भयमेतदुग्रदैत्या-
द्भयमद्य त्वमहो भवैकवैद्यः ।। १३

**इन्द्र उवाच -**

त्र्यक्षाक्षय्यफलप्रदाव्यय गरीभूतोरुकण्ठोज्ज्वल
रक्षास्माञ्छरणागतान् करुणया दैत्यान् प्रहृत्यादरात् ।
त्वत्पादाम्बुरुहं प्रयामि शरणं भस्मत्रिपुण्ड्रोज्ज्वलो
नान्या मेऽस्ति गतिस्त्वमेव भगवन् रुद्रश्रुतौ विश्रुतः ।। १४

**चन्द्र उवाच -**

सोमोत्तंस गजच्छदोत्तम वसामेशान शम्भो प्रभो
दिग्वासा वस मे हृदम्बुजवरे वासीकृताङ्गाखिल ।

दक्षोद्धृत्तसवप्रमर्दनकर हे वासवाद्यर्चित
पाह्यस्मान् दयया सदैव करुणासिन्धोऽद्य बन्धं हर ।। १५

**सूर्य उवाच -**

पतङ्गनयन प्रभो वरकुरङ्गहस्ताम्बुज
वराङ्गधृतगाङ्गसद्वरतरङ्गमालाधर ।
हरामरवरोत्तम प्रबलपापतापं हर
स्मराङ्गदमन प्रभो त्रिपुरदैत्यभीतिं हर ।। १६

**वसव ऊचुः**

असुभिर्वसवो विहीनभासः
स्मरवैरिन् अधुना मुखस्मितं ते ।
सुदृशाऽऽलोक्य महेश दुर्दशां नः
परिहार्यैव हराव सर्वदा नः ।। १७

**मरुतः ऊचुः**

रक्षास्मान् भगवन्नधोक्षजविधिप्रेक्षातिदूराङ्घ्रिक
पाहीन्दुद्युतिमौलिधारितमहागङ्गातरङ्गोज्जवल ।
कामाङ्गाहृतिभीतिदां तव दृशं दैत्येषु सम्पातय ।। १८

**अग्निरुवाच -**

श्रीफालानललोचनान्तकहर व्योमावकाश प्रभो
देवानामवनाय चारुसुदृशाऽपाङ्गेन संवीक्षय (?) ।
उद्धृत्तासुरहृत्त्वदीयकरगशूलानलोत्पाटितं
तद्दैत्यप्रवरोरुसत्पुरवरप्राकारभङ्गं कुरु ।। १९

**यम उवाच -**

श्रीवामदेव जितकाम ललामसोम
भीमाव्ययेश मखशासन व्योमकेश ।
व्योमोत्तमाङ्ग वरसाम समस्त सीम-
भूमा त्वमेव भगवन्नव मां सदैव ।। २०

**निर्ऋतिरुवाच -**

देवेन्दुचूड भगवन्नमरारिपीडां
भूर्यद्य तामगवरात्मसुताङ्गभाग ।
संवारयाशु नितरामरविन्दनेत्र-
पूज्याब्जपाद सहसा नमसा प्रपद्ये ।। २१

**ईशान उवाच -**

शम्भो शङ्कर शान्त खण्डपरशो देवेश विश्वार्तिहन्
उग्रामेय भवोद्भव त्रिणयन मामद्य पाहि प्रभो ।
अस्मान् रक्ष सदैव सौम्यकरुणासारेक्षणोद्वीक्षणात्
रुद्रान् रुग्विनिवारकाशु भगवन्नस्तेन शस्तं नमः* ।। २२

**अश्विनावूचतुः -**

शम्भो त्वं भवभेषजो(?) भसितयुग् भूषाहि शैवोज्ज्वलः (?)
निः शेषं वरपातकं हर हर श्रीसाम्ब रक्षाद्य नौ ।
दैत्योद्धृत्तभयं हरापहर वै श्रीकण्ठ शम्भोऽधुना
वैकुण्ठार्चितपादपङ्कज हरामेय प्रभो शङ्कर ।। २३

---

* नस्ते नमस्ते नमः ।

ऋभव ऊचुः -

मातङ्गानङ्गभङ्गत्रिपुरदनुजजोद्भूतभीतिं हराशु
चन्द्रासार किरीटशोभित कराधारैकशूल प्रभो ।
बन्धं नो हर साम्ब संसृतिभवं पापौघतापं हर
त्र्यक्षाक्षय्यगतिप्रदानकुशलेनाक्ष्णा विलोक्याशु नः ।। २४

पितर ऊचुः -

हे सोमधामशकलाकलितोत्तमाङ्ग
गङ्गातरङ्गसुजटाभरसङ्ग शङ्ग ।
पाह्यस्मदुत्स्मयगतं ज्वरगर्वरूपं
दैत्याधमोरुजनितं[1] भयनाशहेतो ।। २५

विश्वेदेवा ऊचुः -

अन्नानां पतिरेक एव भगवान् रुद्रो वरो [2]द्रापधृक् ।
कद्रुद्रः श्रुतिशेखराङ्कितपदा दैत्यापदुध्वंसकृत् ।
पापं नो विनिवारयाशु भगवन् भूम्ने च धाम्ने नमः
सर्वाम्नायकसीम्नि विश्रुतपदं तत्ते प्रपद्यामहे ।। २६

मातर ऊचुः -

देवामरोत्तम गरादिधरान्तकारे
पाहीक्षणेन क्षणमद्रिसुतासहाय ।
वाहीकृतोक्ष भुजगेशमहोरुहार
पारं भवाद्य सुरतारुजसिन्धुतार ।। २७

---

1. दैत्याधमोरुजमहाभयनाशहेतो । इति पाठः सुगमः । अन्यथा-अनर्थापार्थापत्तिः ।

2. द्रापः जटाः

स्कन्द उवाच -

इत्थं देवैः स्तुतः शम्भुस्त्रिपुरासुरपीडितैः ।
चन्द्रमौलिर्महादेवस्तेषां काममपूरयत् ।। २८

गिरिजाजानिरीशोऽयं वलक्षोक्षपराश्रयः ।
त्र्यक्षो भगाक्षिमथनः प्रत्यथं समदृश्यत* ।। २९

बालेन्दुगङ्गाविधृतजटामौलिः सुरारिहा ।
गणवृन्दवृतस्तेषां उग्रोऽग्रे समदृश्यत ।। ३०

सूतः -

दृष्ट्वा ते सुरपुङ्गवा इति धृतैः स्वैः पद्मसज्जैः करैः
देवं चारुशशाङ्क सुन्दरजटोदग्रं प्रसन्नाननम् ।
सन्नास्ते त्रिपुरैः विदारितपदक्षुण्णं ततो मेनिरे
शम्भुं तद्भयमोचनेऽभ्युपगतं प्राहुः स्वकीर्तिं सुराः ।। ३१

।। इति श्रीशिवरहस्ये दशमांशे देवकृत-
स्तुतावष्टादशोऽध्यायः ।।



* त्रिदशैः समदृश्यत ।

## ।। एकोनविंशोऽध्यायः ।।

**देवाः ऊचुः -**

देव देव महादेव शरणागतवत्सल ।
मन्दार सुन्दर सुममरन्दस्त्राविपत्प्रभ ।। १

महाहिकटकद्योतिविद्योताङ्ग महेश्वर ।
गरधृक्कण्ठकण्ठीर कुटीभूतजगत्त्रय ।। २

विश्वाधिकाशावसन सनातन नमोऽस्तु ते ।
गिरीन्द्रजाकुचाश्लेषपुलकाञ्चितविग्रह ।। ३

*पतङ्गशिखिसोमादिविलोकन गरादन ।
इभवक्त्राब्जलोकार्कविलोकनयनाव्यय ।। ४

उग्र भीम भवामेय पाहि पाहि महेश्वर ।
गजान्धकासुरहर मत्तानङ्गाङ्गनाशक ।। ५

महाकैलासनिलय जगद्विलयशङ्कर ।
किङ्कराञ्छरणापन्नानापन्नान् पाहि शङ्कर ।। ६

महोक्षध्वज कामारे मां सदा पाहि शङ्कर ।
पिनाकपाणे खट्वाङ्गिन् खण्डपर्शो शिवप्रभो ।। ७

व्योमकेश भवामेय दक्षाध्वरनिवारक ।
कपालपाणे भगवन् रुद्रानन्त प्रभो हर ।। ८

फणिभूषण शान्तात्मन् कृत्तिवासो महेश्वर ।
हिरण्यबाहो देवेश कुण्डलीशविभूषण ।। ९

---

* सूर्याग्निसोमनयन ।

शूलपाणे विश्वमूर्ते वेदवेदान्तबोधित ।
कर्पूरगौर गौरीश गङ्गापूरजटाधर ।। १०

कृपासागर भावात्मन् शम्भो साम्ब सदाशिव ।
त्रिपुरासुरसन्त्रस्तानस्मान् पाहि जगत्प्रभो ।। ११

**स्कन्द उवाच -**

इत्थं देवस्तुतिं श्रुत्वा सर्वेषां परमेश्वरः ।
ब्रह्मविष्ण्वादिदेवांश्च विलोक्यप्राह शङ्करः ।। १२

**ईश्वर उवाच -**

त्रिपुरासुरनाशार्थं देवा यूयं सदा मम ।
जयाय रथमेकं मे सन्नद्धं कुरुत द्रुतम् ।। १३

यथा त्रिपुरसंयोगो यावता सम्भविष्यति ।
तावत्स्थास्ये रथे देवा सन्नद्धो रथपः स्वयम् ।। १४

धनुर्मे कल्प्यतां शीघ्रं बाणं घोणयुतं सुराः ।
चक्रे रथस्य सज्जध्वं मौर्वीमहिगणेश्वरम् ।। १५

वेदाश्च चतुरो देवा वाहाः सन्तु सदा मम ।
क्षोणीमण्डलमेतद्वै रथभूतं भवेन्मम ।। १६

कीलास्तस्य महाधर्मा भवन्तु विगतज्वराः ।
यन्ता विधिरयं भूयात् मम सारथ्यकल्पकः ।। १७

इत्थं शम्भोर्वचः श्रुत्वा देवा देवं प्रणम्य च ।
गत्वा तन्मेरुनिलयं रथोपायमचिन्तयन् ।। १८

बृहस्पतिं बृहद्बुद्धिं समाहूय दिवौकसः ।

**देवा ऊचुः**

महादेवस्य समरे रथोऽद्यैव प्रकल्प्यताम् ।। १९

तत्र नो बुद्धिनैपुण्यं निदर्शय गुरूत्तम ।
इत्थं देववचः श्रुत्वा गुरुः प्राह तदामरान् ।। २०

बुद्ध्याभिध्याय देवस्य रथमारोहयोगिनम्* ।
विश्वकर्माणमाहूय सुमुहूर्ते तदा गुरुः ।। २१

विघ्नाद्रिशमनं नत्वा स्तुत्वा सम्पूज्य भक्तितः ।
युक्ति सूक्तिं विचिन्त्याथ स्वयमाधाय यत्नतः ।। २२

क्षोणीमकल्पयत्तत्र रथमण्डलविस्तृतम् ।
चक्रे चक्रेऽथ सूर्येन्दू सन्दक्षाक्षं युगात्मकम् ।। २३

युगं धर्ममयं तस्य रथस्याकल्पयत्ततः ।
घोणां स्मृतिमयीं चक्रे कीलास्तस्य त्रुटीलवाः[1] ।। २४

चत्वारो निगमा वाहाः स्तम्भाः कुम्भाश्च विद्युतः ।
पताकास्तत्र जालानि त्रिवेणुप्रभवोऽभवत् ।। २५

मेरुं धनुस्तदा चक्रुः ज्यां चाहिगुणपुङ्गवम् ।
स्वयं विधिरभूद्यन्ता रश्मयश्चोपनिषद्गणाः ।। २६

ओङ्कारं तत्प्रतोदं वै चक्रुस्तस्य सुरेश्वरः ।
[2]वाजो बाणस्य च शिखी सोमः कण्ठमभूत्तदा ।। २७

---

1. आरोहोपयोगार्हमित्यर्थे

2. वाजः - The Feather of an arrow.

फालं तस्याभवद्विष्णुस्तदा ते रथकल्पनम् ।
कृत्वा निवेदयन्तस्ते नन्दिनं विश्वनन्दिनम् ।। २८

प्राहुः प्राञ्जलयः सर्वे कैलासद्वारि धिष्ठिताः ।

**देवा ऊचुः -**

रथः सज्जो रथपते विजयाय महेशितुः ।। २९

देवानां कार्यसिध्यर्थं विज्ञापय शिलादज ।
तदा देववचः श्रुत्वा गत्वा नत्वा महेश्वरम् ।। ३०

स्तुत्वा प्रोवाच वचनं देवानां नन्दिकेश्वरः ।
विष्णुब्रह्मादयो देवा देवदेव महेश्वर ।। ३१

कैलासद्वारि सङ्गत्य रथः सुरथकल्पनः ।
सिद्धो रथपते शम्भो त्रिपुराणां जयाय ते ।। ३२

प्रतीक्षन्तेऽद्य मुदिताः पद्मिनीव दिवाकरम् ।
क्षीणा देवगणाः सर्वे वीक्षन्ते तव वीक्षणम् ।। ३३

आज्ञां तेषां च विज्ञप्तिं समाकर्णय शङ्कर ।। ३४

**सूत उवाच -**

इत्थं शिलादतनयस्य वचो निशम्य
वीक्ष्याद्रिसौधमयमञ्चविहारसंस्थः ।
पश्यन्नुवाच गिरिजां मदनान्तकारिः
तं नन्दिनं सुवचनामृतसारवर्षैः ।। ३५

।। इति श्रीशिवरहस्ये दशमांशे एकोनविंशोऽध्यायः ।।



## ।। विंशोऽध्यायः ।।

शृणु नन्दिन् ममैवाज्ञां निशामय सुरान् प्रति ।
के तिष्ठन्ति शिवागारद्वारि कैलासपर्वते ।। १

इत्थं शम्भोर्वचः श्रुत्वा नन्दी प्राह शिलादजः ।
स्वर्णवेत्रधरो विप्र महावृषभलाञ्छितम् ।। २

**नन्दिकेशः उवाच -**

शम्भो विष्णुर्विष्णुगणैर्विष्वक्सेनादिभिः सह ।
त्वत्पादाब्जं हृदा ध्यायन् स्थितोद्वारि सुरैर्वृतः ।। ३

प्रजापतिभिरन्यैश्च ब्रह्मा मुनिगणैः सह ।
प्रजपन् शतरुद्रीयं तवागमनमीक्षते ।। ४

ईशानः स्वगणैः सार्धं शूलोद्यतकरैःशिव ।
तवागमनमाकाङ्क्षन् कैलासद्वारि तिष्ठति ।। ५

इन्द्रोऽपि स्वगणैः शाक्रैर्वज्रहस्तैर्दुरासदैः ।
वरुणः स्वगणैः सार्धं पाशहस्तैर्महेश्वरः ।। ६

यक्षाणामधिपो दक्षः कुबेरस्त्वां प्रतीक्षते ।
मरुद्भिर्मारुतो देव अग्निराग्नेयकैर्गणैः ।। ७

निर्ऋतिः स्वगणैः शम्भो यमः स्वगणसंभवैः ।
गन्धर्वगरुडाः सिद्धा विद्याधरवराप्सराः (?)।। ८

मनवो मुनयश्चैव पितरो मातरस्तथा ।
तवागमनमीक्षन्ते जयाय त्रिपुरारिणाम् (?)।। ९

तदा शिलादतनयं प्राह चन्द्रकिरीटधृक् ।
प्राञ्जलिं नन्दिकेशानं स्थितमग्रे तदा मुने । १०

समानय गणेश्वरान् मम वरासिशूलोद्यतान् ।
अहीशकृतकुण्डलान् विमलभस्मपुण्ड्राङ्कितान् ।। ११

मृदङ्गवरशङ्खकान्नखमुखोद्यताडम्बरान्
महारवसुदुन्दुभीः समभिताडयन्तु द्रुतम् ।
इत्युक्तः शशिशेखरेण गणपानाहूय तत्राकरोत्
सन्नद्धान्विविधायुधोद्यकरान् संच्छस्त्रपाणीमणीन् ।। १२

कालाग्निरुद्रो गणलक्षकैर्युत-
स्स वीरभद्रोऽपि च लक्षसङ्ख्यैः ।
चण्डेश्वरश्चापि च पञ्चलक्षैः
भृङ्गी तथा लक्षकसप्तकैश्च ।। १३

नन्दीश्वरः कोटिगणैस्तदा ययौ
बाणासिबाणासनशूलधारिभिः ।
त्रिपुण्ड्रभस्माभरणैर्गजेन्द्र-
चर्माम्बरैर्व्याघ्रमृगाजिनाम्बरैः ।। १४

तरक्षु ऋक्षाखुमुखैर्गजाननैः
सिह्मााननैः शारभभेकवक्त्रैः ।
मयूर मार्जारहयास्य वानर-
मृगास्यकैर्वामनकैस्तथोर्ध्वैः* ।। १५

---

* ऊर्ध्वकैः प्रांशुभिः ।

जटाधरैर्मुण्डितमुण्डषण्डैः
पिचण्डिलैश्चातिकृशैश्च घोरैः ।
मृदङ्गशङ्खानक मड्डुडिण्डिम-
प्रवादकैर्घोषकरैस्तदा ययुः ।। १६

तदा गजास्यस्य गणैः समावृतं
गजास्यकैःपाशसृणीकराब्जैः ।
स्कन्दैर्गणैश्चापि च शक्तिधारिभिः
ययौ *नगारिः स्वगणैस्तदावृतः ।। १७

स सप्तलक्षैर्गजवक्त्रवृन्दै-
स्तदाष्टलक्षैरभितो ययुर्हरम् ।
हंसोत्थामल यक्षचामर मरुत्सञ्जीविनः शीकरो
रत्नभ्राजितपादुकायुतपदो देवान्तिकं प्राप हि ।। १८

छत्रैश्चापि पताककैः शरकरैर्नानानदत्तूर्यकैः
रुद्राणीकर मुक्त मौक्तिकफलैर्मूध्न्यर्चितः शङ्करः ।
रत्नभ्राजित पात्रमध्यगलसत्सौवर्णदीपावली-
देव्या लीलसुकङ्कणध्वनियुतैः सप्तार्चिनीराजितः(?)१९

पश्यन्तां (?) अगकन्यकाब्जवदनं संवीक्ष्य संवीजितो
दिव्यासारमरन्द सौरभसुमोत्कर्षोरुवर्षैरपि ।
नन्दीशान पुरः प्रसारितमहावेत्राग्रतोत्सारितैः (?)
विष्णुब्रह्मसुरासुरादिकगणैः संप्रोक्तवाचां भरैः ।। २०

---

* पर्वतरूपैः असुरैः ।

शम्भो पाहि सुरासुरान् प्रमथपाधीशोक्तिसूक्तिप्रभा-
मन्दारानतमौलिजालमणियुक्पादप्रभावः शिवः ।। २१

तदाजयेश विश्वेश पाहि नः शरणागतान् ।
त्रिपुरासुरसन्त्रस्तानस्मान् पाहि महेश्वर ।। २२

इत्थं स्तुवन्ति संहृष्टा देवाश्च मुनयस्तथा ।
जगुर्गन्धर्वपतयो ननृतुश्च वराप्सराः (?) ।। २३

जगौ शिवापदानानि नारदस्तुम्बुरुस्तदा ।
तदा देवा महादेवं प्रोचुः प्राञ्जलिपाणयः ।। २४

भक्तिनम्रात्मवदना विकिरन्ति सुमोत्करैः ।
तत्कौतुकं महद्वीक्ष्य धृतबाणकरं हरम् ।

**देवाः ऊचुः -**

रथस्ते सज्जोऽयं भवति भवते मोदनिवहो
रथाधीशः श्रुत्वा भवति च भवानेकरथिकः ।
भवत्तो न ज्यायान् सुरवरगणेषूत्तमतनुः ।
निषङ्गी द्रापिस्त्वं हरिशरकरोदाररचितः ।। २६

महेशस्त्वं शम्भो सकलनिगमान्तैकवचसां
प्रभाराशिः संवित्सुरगणनुतो नः शरणदः ।
विधिस्ते देवानां यमनकरणेऽयं सुरथिकः
सुधन्वा शम्भुस्त्वं भवति निखिलात्मा जनिजुषाम् ।।

बाहुभ्यां तव धन्वने शरकरासारे न ता वै श्रुतिः
त्वन्मन्युं भगवन् विमोचय वरे दुस्त्रैपुरे गोपुरे ।

---

* ग्रन्थेऽस्मिन् व्याकरण नियमाः बहुत्रोल्लङ्घिताः , तच्छोधनं न युक्तमसाध्यं च मन्यामहे ।।

अघोरां दैत्येषु प्रकटय तनुं देवनिवहे
विभो शान्तां तां वै कुरु सदयमिन्दुप्रभ विभो ।। २८

**स्कन्द उवाच -**

इत्थं गीर्वाणवाणीं श्रवणपथसीमानुसरणीं
महादेवः श्रुत्वा तरणिवरचक्रं समरुहत् (?)।
क्षणं क्षोणौक्षीणं पदकमलभारानतरथं
वृषेणोद्बद्धं तत्प्रकृतिपरमातन्यत विभुः ।। २९

देवः क्षमास्यन्दनचक्रसूर्य-
सोमनिलाग्नि हरिबाण सुधन्वकोऽद्रिः ।
मौर्वी कृता हि वरशेषविशेषभूषो
योषाकृतार्धतनुरारुरुहत् क्षणेन ।। ३०

वाहाम्नायगणाः सुबोधित विधिप्राचुर्यरश्मीमुखा
धावन्ति श्रुतिमीश्वरस्य करुणासारैकवृष्ट्यामृतैः ।
कुम्भद्योतिपताकका रथगता भान्त्येव तच्चालनै-
र्जन्यं धन्यतमं तदेवमसकृद् द्रष्टुं सहस्राक्षकाः ।। ३१

गणवृन्दारमुखाखुवाहयुक्त-
वरशूरारिगणाश्च केकिवाहः ।
प्रसरन् पार्श्वत एव तं रथस्थं
भगवन्तं प्रययुस्ततः सुराः ।। ३२

दुन्दुभ्याघातघोषोज्झित वरजलधि ध्वान हर्षोरुतर्षे-*
वर्षंतत्समसम्भवद्दिवि पुनर्नानायुधानां स्वनैः ।

---

* शिवे रथारूढेस्थिते पाहीशान दयानिधानेत्यादिःनभस्थले सुरगण-जनितः ध्वनिः जलनिधिध्वानातिशायी अभवदित्यर्थस्फूर्तिः जायते । पद्यस्य साधुत्वे पाठका एव प्रमाणम् ।।

पाहीशान दयानिधान भगवन् पाहि द्रुतं त्रैपुरं
वीर्योद्रिक्तमदं मुदे सुरगणे शान्त्यै जहीशेत्यपि (?)।।

आयोधनं त्रिपुरदारुण कालफाल
लीलानलोद्यतविशालितहस्तशूलः ।
देवाकुलाकुल गणौघमुखोत्थवाद्य-
विध्वस्तशैलविवरोऽभिययौ विजृम्भन् ।। ३४

*वर्षाणां च सहस्त्रकं गिरिसुताजानिः रथस्थोऽभवत्
धुन्वन् मेरुशरासनं हरिशरोऽभिव्यज्य सज्यंकरोत् ।
उन्मील्याक्षियुगोरुकोणसलिलासारैण कोणव्रजं
पातुं स्वंकरशेखरेण कलयन् कालं निनायेश्वरः ।। ३५

तत्र श्रीपरमेश्वरस्य नयनासारप्रवाहोद्भवा-
स्ते वृक्षाः प्रभवन्ति लोकसुहिता रुद्राक्षवृक्षा इति ।
द्वात्रिंशत्कुलनायकाः प्रकथिता गौडोद्भवान्योद्भवा-
स्ते फालानललोचनोत्तमभवाः कैलासमौलिस्थिताः ।।

तत्रान्तरे त्रिपुरवैरिपुरं समील-
दुन्मील्य लोकनयनाग्नि कणावधूतम् ।
चक्रे शिवो गिरिजया रथवर्यसंस्थः
स्वःस्थैः सुरादिगणपैर्न विमोचि बाणम् ।। (?) ३७

---

* नायं ग्रन्थः प्राक्तनः नाप्यार्षश्च । तथापि तथाविधत्वभावनोद्भावनोयैव ग्रन्थेऽस्मिन् बहुत्र पदेपदे व्याकरण नियमोल्लङ्घनं कृतमिति वक्तुं शक्यते। रामायणमहाभारतादि ग्रन्थेष्वपि नैतादृशं नियलोल्लङ्घनं दृश्यते । बहुत्र समस्तपदानां विग्रहवाक्यकल्पनेऽपि भूयान् श्रमः भवति ।

ते देवाः शशिशेखरं पुरवधोदारं रथस्थं तदा
स्वःस्था एव नमन्ति भावपरमाः स्वः स्थास्तथान्ये सुमैः
वृष्टिं तेऽपि वितेनिरे मुनिवरा जेपुश्च रुद्रं तदा
प्रावाद्यन्त वरोरुवाद्यकलनैर्नृत्तैश्च देवस्त्रियः ।। ३८

गन्धर्वाः प्रजगुः कलं लययुतं तालापदानक्रमं (?)
शम्भोस्तस्य पराक्रमं त्रिपुरभिद्देवैः स्तुतः शङ्करः ।
शम्भो शङ्कर देवकिङ्कर महाक्षोणीरथाध्यक्ष ते
लोके न त्रिदिवद्विषोऽपि मिषतां भस्मीकृतास्ते यतः ।।

वाता वान्त्यपि भास्करादिग्रहपा द्योतन्ति वै केवला
भाभान्ति द्युति दीप्तिऋक्षसहितः सोमो धुती ते तमः ।
शान्तश्चोग्रशिखः शिखी विजयते लोकेषु ते सुप्रभो
कस्ते वेदगुणान् गणं कलयतां स्यादष्टमूर्तिर्भवान् ।।४०

वेदांस्ते मुनयोऽपि जेपुरमरा नत्वाभियाताः शिवं
स्वानि स्थानवराणि दीप्तिपरमा विष्ण्वादयोऽप्यब्जजाः ।
कैलासं निलयं ययौ गिरिजया देवः पशूनां पतिः
नन्द्याद्यैर्गणपुङ्गवैरगणितैस्तूर्यौघकोलाहलैः ।। ४१

**स्कन्द उवाच -**

एवं ते त्रिपुरोरुगोपुरमहासन्दारिणीं ते कथां
पापध्वान्त निवारणैकतरणिं श्रुत्वा भवेच्छाङ्करः ।
शर्वस्य प्रियकारिणीमथ मुने मुक्तेः सदा सूक्तिदाम्
सिद्धान्ते सरणिं ददाति विधृता भक्त्या किमन्यद्ब्रुवे ।।

।। इति श्रीशिवरहस्ये दशमांशे त्रिपुरवधोनाम
विंशोऽध्यायः ।।



## ।। एकविंशोऽध्यायः ।।

**देव्युवाच -**

कथं जातो महादेव भूमौ रुद्राक्षवृक्षकः ।
कथां च तां महादेव त्वं विस्तरतो वद ।। १

त्वदक्षजाश्रुसञ्जातास्ते वै रुद्राक्षवृक्षकाः ।
द्वात्रिंशत्प्रथिता देव कथयैतन्महामते ।। २

**स्कन्द उवाच -**

इति देव्या वचःश्रुत्वा प्राह रुद्राक्षसम्भवम् ।
जगतां पापतापादिनिवारणनिदानकम् ।। ३

**ईश्वर उवाच -**

शृणु पद्मपलाशाक्षि रुद्राक्षप्रभवं शिवे ।
सर्वपापक्षयकरं त्र्यक्षप्रीतिकरं सदा ।। ४

अक्षय्यफलदं साक्षात्पापध्वान्तनिवारकम् ।
मदुन्मेषनिमेषादिनेत्रजाश्रुसमुद्भवाः ।। ५

रुद्राक्षवृक्षास्ते जाता भूमौ देवैः सदाशिवे ।
कैलासमौलिजातास्ते वृक्षाः सौवर्णसप्रभाः ।। ६

पुरा ब्रह्मादयो देवा लोकपापनिवृत्तये ।
कैलास द्वारिसङ्गत्य सुखोपायेनमोचकम् ।। ७

विष्ण्वादयः सदा मां हि तुष्टुवुर्लोकगुप्तये ।
रुद्राध्यायेन मां देवि दशवर्षाणि तुष्टुवुः ।। ८

देवाः ऊचुः

शम्भो शरण्य करुणार्णव देवदेव
हे व्योमकेश वरसामगणस्तुताद्य ।
भूमा त्वमेव महिमालय चन्द्रचूड
भामार्धकाय जितकाम शिवोग्र भीम ।। ९

उत्तुङ्गलिङ्ग भुजगाङ्ग स्फुरत्स्फु लिङ्ग
मातङ्गभोगिलसिताङ्ग शशाङ्कमौले ।
भस्माङ्गसङ्ग भवभङ्ग महेश लिङ्ग
व्योमाङ्गसङ्गजनिताङ्ग सुखादिसङ्ग ।। १०

शिखि शशि दिननाथ लोलनेत्र
प्रथितश्रोत्रविलोचनोरुहार ।
अव भव भगवन् सनातनाद्य
त्रिभुवननाथ सनाथयाशु चास्मान् ।। ११

शिव शिव शङ्कर मारमार शम्भो
भवभव देव महेश आद्यवैद्य
गरधर चारुशशाङ्कशेखरेश
त्रिपुरोद्यानहराऽऽद्य शर्व पाहि ।। १२

इत्थं देवस्तुतिं श्रुत्वा भगवान् चन्द्रशेखरः ।
प्रादुर्बभूव पुरतो भगवान् वृषभध्वजः ।। १३

चारुचन्द्रकलामौलिर्गिरिजार्धाकृतिर्हरः
नीलकण्ठो विरूपाक्षो गङ्गातुङ्गजटाधरः ।। १४

मृगशोभिकरोदग्र उग्रो देवानभाषत ।

**ईश उवाच -**

भो भो देवगणा यूयं किमर्थं मां समागताः ।। १५

मा चिरं ब्रूत सर्वं मे सर्वं वः साधयाम्यहम् ।

**सूत उवाच -**

इत्थं महेशवचनं श्रुत्वा देवाः सवासवाः ।। १६

हरिपद्मजमुख्यास्ते प्रणम्य प्राहुरीश्वरम् ।

**देवा ऊचुः -**

देव देव महादेव करुणारससागर ।। १७

कपालपाणे विश्वात्मन् जगतां रक्षणेक्षण ।
पाहि देवासुरमुनीन् रुद्राक्षाणां प्रदानतः ।। १८

लोकपापौघसन्तापं निवारय कृपाकर ।
स देवानां वचः श्रुत्वा देवदेवो महेश्वरः ।। १९

करुणारसया दृष्ट्या विलोक्यालोकमुद्भटम् ।
त्रैलोक्यं पापसङ्क्रान्तं जनतां वीक्ष्य दुःखिताम् ।। २०

उवाच वीक्ष्य(?) त्र्यक्षोऽसौ देवानां मुदमादधत् ।
कैलासमौलिपालीतो वृक्षान् रुद्राक्षभूषितान् ।। २१

चतुर्दशकुलोत्पन्नान् लोलनेत्रोद्भवान् स्वकान् ।
भूमौ गौडोद्भवांश्चक्रे रुद्राक्षान् शिववल्लभान् ।। २२

मधुरायामयोध्यायां लङ्कायां मलये तथा ।
सह्याद्रौ सह्यपापौघभेदनान् श्रुतिभेदितान् ।। २३

दत्वा द्विजानां भूमेश्च दत्वा राज्ञां शिवोऽवदत् ।
पीतान् वैश्येष्वदाद्वैश्याम कृष्णाञ्छूद्रेष्वदाच्छिवः ।। २४

देवानां च मुनीनां च गन्धर्वाणां सदाशिवः ।
चतुर्दशमुखान् शम्भुर्व्यदाद्भूमौ च पापहान् ।। २५

लब्ध्वा रुद्राक्षवृक्षान् परशिवनयनाश्रूद्भवान् लोकपाप-
तापोंद्रेकाति तापज्वरहरणचणान् प्राप्य नत्वा महोक्षम् ।
आनीय वृक्षतिलकान् भुवि ते निदध्युः ।। २६

कैलासमौलिविपिनोत्तममध्यसंस्थ-
रुद्राक्षवृक्षवनमेतदघक्षयाय ।
सङ्कल्पितं हि मनसैव मयाद्रिकन्ये
तद्रक्षितं मम गणैरपि यक्षवर्यैः ।। २७

एकाननाद्यादि चतुर्दशास्य-
रुद्राक्षमाहुरगजे श्रुतयःपुराणे ।
रुद्राक्षवृक्षकुसुमोद्भववातपोत-
सर्गोऽपि दुर्लभतरःसुरसत्तमानाम् ।। २८

तन्मूलभूम्नि मणिहेम्नि सुकान्तिधाम्नि
प्रासादसीम्नि विहरामि शिवे त्वयाहम् ।
मयापि गिरिजे सदा वरमदक्षिजाश्रूद्भवा
भवन्ति भवमोचका भुवि भवन्ति रुद्राक्षकाः ।।

रुद्राक्षार्चनमम्बिके त्वघहरं माल्लिङ्गपूजासमं
नीरेणैव निवर्तयेत् विधिहितां सामान्यपूजां चरेत् ।
तेनैवाहमहो ददामि विपुलं भाग्यं च मुक्तिं शिवे
तस्यैवाहमुमे ददामि च पदं कैलासमौलौ सदा ।।

वृत्ताक्षकं स्वकृतरन्ध्रमुमे विशिष्टं
रुद्राक्षमेतदघहारि भवेत मुक्त्यै ।
धार्यं तदेव शिवलिङ्गसमर्चकैश्च
तत्पूरुषेणकृतरन्ध्रकमध्यमं स्यात् ।।

नाश्नीयाज्जलमन्नमम्बुमपि (?) वा भस्माक्षधार्यं विना
भक्त्या वाथ गृही वनी यतिमतिर्वर्णी च वा शङ्करि ।
दुष्पारं नरकं प्रयाति स तदा गायत्रिजापेन त-
द्वर्णानां च यतिस्तु मुख्यप्रणवोपास्यस्तदा मुक्तिभाक् ।।

।। इति श्रीशिवरहस्ये दशमांशे
एकविंशोऽध्यायः ।।



## ।। द्वाविंशोऽध्यायः ।।

**स्कन्द उवाच -**

अत्र रुद्राक्षमाहात्म्यं सेतिहासं वदामि ते ।
शृणु पुण्यतमाख्यानं गणवृन्दैर्द्विजैरपि ।। १

पापताप विनाशाय सावधानमना मुने ।
आसीद्गौडे पुरा वैश्यश्चन्द्रगुप्ताभिधो धनी ।। २

धनेन यक्षाधिपतेः समो रुद्राक्षभूषितः ।
त्र्यक्षपादाम्बुजे भक्तः शक्तो भक्तप्रपूजकः ।। ३

शिवभक्तान् सदा भक्त्या भोजयेत् षड्रसौदनैः ।
रुद्राक्षदानतो भक्त्या शांभवांश्चाप्यतोषयत् ।। ४

धनैरन्नैश्च नियतं नौकाभिश्चार्णवे रतः ।
धनान्यादाय रत्नानि वृद्धिसिध्यैव जीवति ।। ५

सन्तुष्टो भस्मरुद्राक्षभूषितं वीक्ष्य वैश्यराट् ।
शिपिविष्टमना नित्यं भस्मरुद्राक्षभूषितः ।। ६

रुद्राक्षवृक्षबीजानि क्रयार्थं धनदोपमः ।
बह्वीभिः स तु घोणीभिर्देशेष्वन्येषु गौडजान् ।। ७

प्रैषयत्प्रेष्यवर्गैः स विक्रयार्थमसौ वणिक् ।
रासभैर्वृषभैश्चैव खरोष्ट्रैरपि वै मुने ।। ८

अवन्तीमालवे चैव केदारे पुष्करे तथा ।
रुद्रकोटौ प्रभासे च लङ्कायां मलये तथा ।। ९

स वणिक्प्रेषमामास धनलाभाय सादरम् ।
सहस्रेण खरोष्ट्रैश्च वृषभै रासभैरपि ।। १०

विन्ध्याद्रिमगमत्तस्य तत्र वाहोऽस्य सत्तम ।
रुद्राक्षघोणीसहितः रासभैर्वृषभैर्युतः ।। ११

घोणीश्रेणीभिरापूर्णो निःश्रेणीव गिरेस्तटम् ।
विन्ध्याद्रे रारुहत्सार्थश्चन्द्रगुप्तस्य सत्तम ।। १२

तत्र कश्चित्खरो भग्नपादः प्राप तदद्रितः ।
घोणीभरेण भारेण रुद्राक्षाणां तदानघ ।। १३

समावृतो ममारायं भग्नाङ्गोऽसृग्वमन् तदा ।
तिर्यग्जिह्वोऽश्रुनयनः सार्थानां पश्यतां तदा ।। १४

तत्रान्तरे समानीतं शिवदूताहृतं मुने ।
विमानं तत्समानीतं रुद्रकन्यासमावृतम् ।। १५

चलच्चामरवाताद्यैर्वीजितं कुसुमोज्जवलम् ।
त्रिणेत्रो नीलकण्ठश्च गङ्गाचन्द्रकलाधरः ।। १६

खरो रुद्रगणाकारो दृष्टो वैश्येन तेन हि ।
तमाह चन्द्रगुप्तं तं तदा रुद्रगणोत्तमः ।। १७

**रुद्रगण उवाच -**

पश्यावश्यं वैश्यवर्य वश्योऽहं त्वत्समागमात् ।
रुद्राक्षवाहनान्मेऽद्य गणत्वं शङ्करस्पृहि ।। १८

प्राप्तं मया गमिष्यामि कैलासं शिववल्लभम् ।
शाम्भवस्याङ्गसङ्गेन रुद्राक्षाणां च धारणात् ।। १९

विष्णुब्रह्मादिदुर्दर्शं मया प्राप्तं वणिग्वर ।
इत्युक्त्वा स विमानेन ययौ रुद्राकृतिः खरः ।। २०

चन्द्रगुप्तो विस्मिताक्षः समुदैक्षत तं तदा ।
प्रशस्य तं खरं तत्र तदा रुद्रक्षधारिणम् ।। २१

रुद्राक्षधारिणां पुण्यं वर्णयन् मनसावणिक् ।
सार्थैर्जगाम देशं तं रुद्राक्षक्रयविक्रयी ।। २२

शाम्भवेभ्यो मुदा दत्वा रुद्राक्षाञ्छिववल्लभान् ।
एकाननाद्यान् लोकान्तान् स्वयं सौवर्णवेष्टितान् ।। २३

दधार स वणिग्वर्यो वरभस्मत्रिपुण्ड्रधृक् ।
तत्प्रेष्यास्तत्कलत्राणि तत्सुता बान्धवस्तथा ।। २४

दासीदासं वाहवृषा रासभो वा *मयस्तथा ।
रुद्राक्षधारिणः सर्वेऽप्यभवन् भस्मधारिणः ।। २५

स चन्द्रगुप्तो नियतं वसन् गुप्तधनस्तदा ।
कैलासं समवाप्यान्ते गणत्वं प्राप शाङ्करम् ।। २६

एवं रुद्राक्षबीजानां वृक्षाणां धारणान्मुने ।
खरोऽपि चन्द्रगुप्तस्य गणत्वं प्राप शाङ्करम् ।। २७

---

* मयः – Camel.

किम्पुनर्ब्राह्मणा भक्ताः क्षत्रवैश्याश्च शूद्रकाः ।
गृहस्था वर्णिनो वन्या मुने सन्यासिनस्तथा ।। २८

रुद्राक्षधारिणः सर्वे रुद्रा एव न संशयः ।। २९

यः कीकटोऽपि विधृतोत्तमभस्मपुण्ड्रो
रुद्राक्षबीजवहनेन मृतिं प्रयातः ।
स्याच्चन्द्रगुप्तखरवत्खलु विन्ध्यशैले
शम्भोर्गणत्वपदवीं समवाप्य मुक्तः ।। ३०

धृतरुद्राक्षसरो नरोऽपिवा-
प्यधमो वान्त्यज एव वा द्विजो वा ।
स मुने प्रतरेत वै भवं
सितभस्माङ्गयुतः सुपुण्यधीः ।। ३१

पुण्येतिहासः शुभदः पुरातनो
देवेन देव्यै कथितो मुने तदा ।
तदेतदापादितमेतदेव मे
पुनः शिवोऽप्याह मुदा भवान्यै ।। ३२

**ईश्वर उवाच -**

त्र्यक्षाश्रुप्रभवा भवन्ति विमला रुद्राक्षवृक्षाःक्षितौ
दृष्टा अप्यघशैलदारणचणाः संसारबन्धापहाः ।
पुण्यापुण्यसमीहितार्थकलने स्वाङ्गे च सम्भूषणाः
शर्वाणीरमणार्चनासु नियतं धार्या हि मद्भूषणाः ।। ३३

रुद्राक्षस्मृतिमात्रतोऽप्यघकुलं नश्येच्च पश्यन्नरो
मुच्येतैव हि संसृतेर्जनिजरारोगैः स्पृशन्मुक्तिभाक् ।
नामोच्चारणमात्रतोऽतिकृपणः पाणिं कृपाणे(पाणौ कृपाणं)दधत्।।
छिन्द्यादेव हि पापदुर्द्रुमवनं गोदानपुण्यादिभाक् ।।

रुद्राक्षोरु किरीट कुण्डल धरस्तस्याङ्गदे कङ्कणे
मालाभिर्वरवक्षसा च विमलो भूयाच्छिवे पावनः ।
तस्यानुक्षणवीक्षणेन गिरिजे लोकस्य कष्टं मुदा
संहृष्टो नितरां हरामि सततं तत्सङ्गसङ्गात्मनाम् ।। ३५

यस्मिन् ग्रामे पुरे वा धृतवरविमलोदाररुद्राक्षभूष-
स्तिष्ठेत्तत्र न पातकान्तकभयं दुःखं कुतस्तत्तनौ ।
तत्क्षेत्रं विमलं तदेव हि शिवागारं वरं शाम्भवं
तद्देहस्थहृदम्बुजे गिरिजया मद्वास इष्टः सदा ।। ३६

यो नित्यं भसितत्रिपुण्ड्ररहितो रुद्राक्षमालोज्झितः
तद्दृष्टं समलं त्यजन्ति विमला अन्नं च नीरं फलम् ।
सो(?)नित्यं शवसूतकीपरमुमे पापाहिदष्टो नरो
नित्यं तन्मुखवीक्षणेन गिरिजे सूर्यो निरीक्ष्यो जनैः ।। ३७

।। इति श्रीशिवरहस्ये दशमांशे रुद्राक्षमहिमा नाम
द्वाविंशोऽध्यायः ।।



## ।। त्रयोविंशोऽध्यायः ।।

**देव्युवाच -**

कस्माज्जातं तु किन्नाम कथं वा धार्यते नरैः ।
तेषां च धारणं देव कैर्मन्त्रैः कथयस्व मे ।। १

**ईश्वरः -**

स्थावरत्वमनुप्राप्तो भक्तानुग्रहकारणात् ।
भक्त्या रात्रौ दिवापापं दिवा रात्रिकृतं हरेत् ।। २

लक्षं तु दर्शनात्पुण्यं कोटिस्तत्स्पर्शनात्फलम् ।
ततः कोटिशतं पुण्यं लभते धारणान्नरः ।। ३

लक्षकोटिसहस्राणि लक्षकोटिशतानि च ।
तज्जपाल्लभते पुण्यं नरो रुद्राक्षधारणात् ।। ४

रुद्राक्षाणां तु शुद्धानां धारणे स्यान्महाफलम् ।
धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम् ।। ५

बदरीफलमात्रं तु मध्यमं प्रोच्यते बुधैः ।
अधमं चैकमात्रं स्यात्प्रक्रियैषा मयोच्यते ।। ६

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव शिवाज्ञया ।
वृक्षा जाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ।। ७

श्वेतास्तुब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः ।
पीता वैश्यास्तु विज्ञेया कृष्णाः शूद्रा उदाहृताः ।। ८

---

* एकमात्रं अल्पमात्रमित्यर्थः सूक्ष्मबीजं रुद्राक्षेषु नोत्तमं भवति। चणमात्रं इति प्रसिद्धम् ।

ब्राह्मणो बिभृयाच्छ्वेतान् रक्तान् राजा तु धारयेत् ।
पीतान्वैश्यस्तु बिभृयात्कृष्णान् शूद्रस्तु धारयेत् ।। ९

*रुम्राः स्निग्धा दृढाः स्थूलाः कण्टकैः संयुताः शुभाः ।
कृमिदष्टं छिन्नभिन्नं कण्टकाधानमेव च ।। १०

व्रणयुक्तं चर्मवृतं षड्रुद्राक्षंविवर्जयेत् ।
स्वयमेव कृतं द्वारं रुद्राक्षं स्यादिहोत्तमम् ।। ११

यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ।
सर्वान् स्निग्धान् दृढान् स्थूलान् क्षौमसूत्रेण संयुतान् ।।

धारयेत्सर्वगात्रेषु समास्यानि विचक्षणः
निरये(लये) सोमलेखे वा यस्य रेखा प्रदृश्यते ।। १३

तदक्षमुत्तमं विद्यात्तद्धार्यं शिवपूजकैः ।
शिखायामेकरुद्राक्षं त्रिशतं शिरसावहेत् ।। १४

षट्शतं च गले धार्यं बाह्वोर्द्वादश धारयेत् ।
मणिबन्धे तु तावन्ति स्कन्धे पञ्चाशतं हरेत् ।। १५

अष्टोत्तरशतं मालामुपवीतं प्रकल्पयेत् ।
द्विसरं त्रिसरं वापि सराणां पञ्चकं तु वा ।। १६

शिवपूजारतःसर्वो बिभृयात्कण्ठदेशतः ।
मकुटे कुण्डले चैव कणिकाहारकेषु च ।। १७

---

* रुम्र Bright, beautiful

केयूरकटके चैव कुक्षिबन्धे विशेषतः ।
शिवभक्तः सदाकालं रुद्राक्षं धारयेन्नरः ।। १८

त्रिशतं त्वधमं पञ्चशतं मध्यममुच्यते ।
सहस्त्रमुत्तमं प्रोक्तमेवंभेदेन धारयेत् ।। १९

शिरसीशानमन्त्रेण कण्ठे तत्पुरुषेण च ।
अघोरेण गले धार्यं तेनैव हृदयेऽपि च ।। २०

अघोरबीजमन्त्रेण करयोर्धारयेत्सुधीः ।
पञ्चाशदक्षग्रथितान् व्योमव्यापीति चोदरे ।। २१

पञ्चब्रह्मभिरङ्गैश्च(ङ्गेषु)त्रिमालां पञ्च सप्त च ।
अथवा मूलमन्त्रेण सर्वाण्यक्षाणि धारयेत् ।। २२

एकवक्त्रं तु रुद्राक्षं परब्रह्मस्वरूपकम् ।
तद्धारणात्परे तत्वे लीयते विजितेन्द्रियः ।। २३

द्विवक्त्रं तु मुनिश्रेष्ठ अर्धनारीश्वरो भवेत् ।
धारणादर्धनारीशः प्रीयते तस्य नित्यशः ।। २४

त्रिवक्त्रमनलः साक्षात् स्त्रीहत्यां हन्ति वै क्षणात् ।
त्रिमुखं चैव रुद्राक्षमग्नित्रयस्वरूपकम् ।। २५

तदेव हि परं ब्रह्म नरहत्यां व्यपोहति ।
चतुर्मुखं तु रुद्राक्षं पितामहस्वरूपकम् ।। २६

पञ्चवक्त्रं तु रुद्राक्षं पञ्चब्रह्मस्वरूपकम् ।
तस्य धारणमात्रेण सन्तुष्यति सदाशिवः ।। २७

पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः ।
अगम्यागमनं चैवमभक्ष्यस्य च भक्षकः ।
(अगम्यागमनाच्चैमभक्ष्यस्य भक्षणात् ) ।। २८

मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात् ।
षड्वक्त्रमपि रुद्राक्षं कार्तिकेयाधिदैवतम् ।। २९

विनायकाधिदैवं च प्रवदन्ति मनीषिणः ।
सप्तवक्त्रं तु रुद्राक्षं सप्तमं निधिदैवतम् ।। ३०

सप्ताश्वदैवतं चैव सारसप्तकदैवतम् ।
तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ।। ३१

महाविज्ञानसम्पत्तिः शुचेर्धारयतः शनैः ।
अष्टवक्त्रं तु रुद्राक्षमष्टमूर्त्यधिदैवतम् ।। ३२

वस्वष्टकप्रियं चैव गङ्गाप्रीतिकरं परम् ।
तद्धारणादिमे प्रीता भवेयुः सत्यवादिनः ।। ३३

नववक्त्रं तु रुद्राक्षं नवशक्त्यधि दैवतम् ।
तस्य धारणमात्रेण प्रीणते *नवराशयः ।। ३४

दशवक्त्रं तु रुद्राक्षं यमदेवमुदाहृतम् ।
दशांशप्रीतिजननं धारणे नात्र संशयः ।। ३५

एकादशमुखं त्वक्षं रुद्रैकादशदैवतम् ।
तदिन्द्रदैवतं चाहुः सदा सौभाग्यवर्धनम् ।। ३६

रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् ।
द्वादशादित्यदैवं च बिभृयात्तत्परो नरः ।। ३७

---

* नवशक्तयः

त्रयोदशमुखं चाक्षं कामदं सिद्धिदं शुभम् ।
तस्य धारणमात्रेण कामदेवः प्रसीदति ।। ३८

चतुर्दशमुखं चाक्षं रुद्रनेत्रसमुद्भवम् ।
सर्वव्याधिहरं चैव सदारोग्यमवाप्नुयात् ।। ३९

मद्यं मांसं च लशुनं पलाण्डुं मूलमेव च ।
श्लेष्मातकं विड्वाराहं भक्षयन्वर्जयेत्ततः ।। ४०

ग्रहणे विषुवे चैवाप्ययने सङ्क्रमे तथा ।
दर्शे च पूर्णमासे च पुण्येषु दिवसेषु च ।। ४१

रुद्राक्षधारणात्सद्यः सर्वपापक्षयो भवेत् ।। ४२

अन्ये चापि भवन्ति पुण्यपरमाद्वात्रिंशजात्या नगा
देवप्रार्थनया मयाश्रुतिहिता भूमौ जनाघौघहृत् ।
मान्या धन्यास्त एव क्षितितलसुभगा धारणीयाश्च सर्वे
पापापारभवोरुदावशमने पर्जन्यरूपाश्च ते ।। ४३

।। इति श्रीशिवरहस्ये दशमांशे
त्रयोविंशोऽध्यायः ।।



## ।। चतुर्विंशोऽध्यायः ।।

**स्कन्द उवाच -**

कैलासस्थानजन्यानां रुद्राक्षाणां मुने तदा ।
वक्त्राणां शतसङ्ख्यानां भेदाः प्रोक्ताः समासतः । १

एकवक्त्रेश्वरः साक्षात् द्विवक्त्रं पार्वतीशिवौ ।
त्रिवक्त्रमनलः साक्षात् चतुर्वक्त्रः पितामहः ।। २

पञ्चवक्त्रो हरिर्विप्र(?) षण्मुखोऽहं सनातनः ।
सप्तैव लोकाः सप्तास्यमष्टास्यं वसुदैवतम् ।। ३

नवास्यं नवदुर्गास्याद्दशास्यं दशनागकाः ।
एकादशास्यं रुद्राधिदैवतं परिकीर्तितम् ।। ४

द्वादशादित्यदैवत्यं द्वादशास्यं प्रकीर्तितम् ।
त्रयोदशमुखं चाक्षं कामदेवसमाह्वयम् ।। ५

चतुर्दशास्यं ते लोकाश्चतुर्दश मुने सदा ।
शताष्टोत्तरसङ्ख्यानां मुखानां देवता मुने ।। ६

कथयाम्यानुपूर्व्येण शिवप्रोक्तं सनातनम् ।
मतङ्गा वानरा ऋक्षा गरुडाः पतगास्तथा ।। ७

मुनयो मनवश्चैव लोकाश्चाथ चतुर्दश ।
नागानां पतयश्चैव दिग्गजाः पक्षिणस्तथा ।। ८

मारुतो मातरश्चैव मम रुद्रगणास्तथा ।
सप्तर्षयः पर्वदेवाः कर्मदेवाःसनातनाः ।। ९

कलाकाष्ठामुहूर्ताश्च ऋक्षाणि युगजातयः ।
मधुश्च माधवश्चैव ऋतवो हायनास्तथा ।। १०

क्षणास्त्रुटिलवाश्चैव गावो धर्मोऽप्यधर्मकः ।
सिद्धा यथा मखाश्चैव नदीकालाग्निरुद्रकः ।। ११

भैरवश्चैव चण्डीशो माण्डकिर्भाण्डिकिस्तथा ।
वेदाश्चोपनिषद्वर्गः पुराणानि तथागमाः ।। १२

रहस्यानि रवगङ्गा च नदी कालाग्निरुद्रकः ।
पर्वता वृक्षगुल्माद्यास्तृणौषधिलतास्तथा ।। १३

प्रणवो मन्त्रजाश्चैव छन्दो मन्त्राश्च मानवाः ।
तथैवाप्सरसः सर्वा गन्धर्वा नागकास्तथा ।। १४

गतागती पुण्यपापे तथा सर्वं कृताकृतम् ।
इन्द्रियाणि मनश्चैव त्वङ्मांसरसधातवः ।। १५

अतीतानागतं चैव भूतं भव्यं च वर्तितम् ।
नक्ताभिमानिनो देवा दिशां कालाश्च सङ्ख्यया ।। १६

रुद्राक्षवदनानां च देवाश्चाष्टोत्तरं शतम् ।
प्रोक्ताः कैलाससदनरुद्राक्षाणां शिवे मम ।। १७

भूमौ चतुर्दशान्येव(?) मुखान्येव भवन्ति हि ।। १८

मुखं मुखेषु ग्रथितं किलेदं
पुण्याय पापाय भवेदथान्यथा ।
*तत्सूत्रैर्मणिभिर्विशिष्ट-
मष्टाकृतेः प्रीतिकरं भवेच्छिवे ।। १९

---

* तत्सूत्रवर्यैर्मणिभिः -

शिरोविधृतमक्षकं वरशिरः कृताघं हरेत्
सुवक्षसि धृतं च तत्परकतल्पभोगोद्भवम्[1] ।
करादिविधृताक्षकैः करकृतोरुपापापहं
भवेद्गिरिवरात्मजे तदिह पुण्यवृद्धिप्रदम् ।। २०

धृतरुद्राक्षसरेण दत्तदानं
परमां वृद्धिमुपैति देवलोके ।
[2]प्रतिगृह्णणन्नधमां गतिं न चाप्नुया-
द्यदि भस्माक्षधरोद्विजोत्तमोऽपि ।। २१

आवश्यकं वश्यकरं सदैव
रुद्राक्षमेतद्धृतमद्रिकन्ये ।
पश्याधुना कश्यपकण्वमुख्यै-
र्धृतं सदा देवगणैर्मुदा मे ।। २२

अलं विविधदानतोऽप्यलमुमे मखादिक्रिया
विचारपरमक्रियाविविधवेदबोधैरपि ।
धृतं यदि तनौ शिवे विमलमेतदेवादरात्
ममाक्षमिदमुत्तमं झटिति हृत्तमो नाशयेत् ।। २३

त्रैयम्बकेन मनुना विधृतं यदाक्षं
सद्वर्णिनाऽथ गृहिणा वनगैर्नरैर्वा ।
पञ्चाक्षरेण सधवाभिरथाधवाभिः
तत्कण्ठमध्यविधृतं वरमङ्गलं स्यात् ।। २४

---

1. भोगोद्भवं पातकं हरेत् इत्यर्थः ।
2. यदि भस्माक्षधरो द्विजोत्तमः । इति पाठः सङ्गतो भाति ।

तारायैव यतेर्वदन्ति निगमा रुद्राक्षमालाधृतिं
तां त्यक्त्वा निगमोत्तमाङ्गवचसां सारं न स प्राप्नुयात् ।
ज्ञानाङ्गं त्विदमेव बोधजनकं मुक्तिप्रदं शाश्वतं
प्रातर्धारितमद्रिजेऽक्षवरकं नैशाघहं पार्वति ।। २५

मूर्ध्ना धारितमक्षविंशतियुगं बाह्वोस्तथा षोडश
षट्कद्वित्वमुमे धृतं (?)हि करयोः षट्कुण्डले मण्डने ।
वक्षस्यष्टशताधिका च विधृता देव्यक्षमाला मुदे
सर्वाङ्गे विधृतं वराक्षमगजे सर्वाघहं मुक्तिदम् ।। २६

रुद्राक्षहीनवपुषं न समक्षमीक्षे
चक्षुःश्रवोरुवरमन्युजकोपरूक्षैः ।
तं धुक्षयामि नितरामरिपक्षमीक्षे
कक्षेऽग्निसिद्धिरिव मे स भवेत्कटाक्षैः ।। २७

शतं नियतमम्बिके प्रयुतमेव धार्यं नरैः
सहस्रमथ लक्षकं विमलमेव रुद्राक्षकम् ।
स कोटिविधृतं शिवे दधदपारपुण्यं शिवे
विरिञ्चिहरिशङ्करशतमखादिसाम्राज्यदम् ।। २८

वलक्षं रुद्राक्षं *द्विजजनुभिरेवैह विहितं
सुरक्तं क्षत्राणां प्रकथितमुमे पीतमसकृत् ।
ततो वैश्यैर्धार्यं प्रतिदिनकमावश्यकमहो
तथा कृष्णं शूद्रैः श्रुतिगदितमार्गोऽयमगजे ।। २९

---

* द्विजजनिभृतामेवैह विहितमिति पाठः सङ्गतो भाति ।

न वर्णसंसिद्धिरुमे विशिष्टा
रुद्राक्षमेतद्वरशिष्टधार्यम् ।
वर्णैस्तथैवाश्रमतत्परैर्नरैः
स्त्रीभिश्च धार्यं वरमक्षजातम् ।। ३०

धृतसितभसितत्रिपुण्ड्रफाला
वररुद्राक्षमहाङ्गशोभिमालाः ।
सततं शिवनामसक्तिशीलाः
शिवमेव प्रवदन्ति ते विशालाः ।। ३१

।। इति श्रीशिवरहस्ये दशमांशे
चतुर्विंशोऽध्यायः ।।



## ।। पञ्चविंशोऽध्यायः ।।

**स्कन्द उवाच -**

विधिरीशेन कथितो रुद्राक्षमुखतो मुने ।
शिवेनोक्तः समासेन तद्धारणविधिः सदा ।। १

पुण्योऽयं शिवसंवादो देव्यै देवेन चोदितः ।
रुद्राक्षवक्षसां नित्यं शिवः साक्षात्प्रसीदति ।। २

रुद्राक्षं प्रथमं धृत्वा कर्म कुर्यादतन्द्रितः ।
भस्मवद्धारणविधिः कैश्चित् त्रैयम्बकोदितः ।। ३

सर्वाश्रमाणां वर्णानां स्त्रीशूद्राणां शिवाख्यया ।
धार्याः सदैव रुद्राक्षा यतीनां प्रणवेन हि ।। ४

दिवा बिभ्रद्रात्रिकृतै रात्रौ बिभ्रद्दिवाकृतैः ।
प्रातर्मध्याह्नसायाह्ने बिभ्रत्तत्पूर्वपातकैः ।। ५

सद्य एवविमुच्येत पितृहोमार्चनाविधौ ।
रुद्राक्षधृङ् नरो नित्यं तत्तद्दशगुणं फलम् ।। ६

प्राप्नोति शिवसारूप्यमेषोऽत्र विहितो विधिः ।
देवदेव्योश्च संवादः कैलासे विदितो मया ।। ७

तं तेऽहं सम्प्रवक्ष्यामि तन्मे निगदतः शृणु ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते भवसागरात् ।। ८
सर्वेषां सर्वपापानां शामकोऽयं मुने सदा ।। ९

नानारुद्राक्षधरेण पूजितमुमे लिङ्गं न मुक्तिप्रदं
कुर्वंस्तेन विवर्जितोऽत्र मनुजो नो तस्य विन्देत्फलम् ।
निन्दंश्चापि सदाक्षधारणमथो यात्येव वंश्यैर्युतः
सन्दष्टः कृमिभक्षिताङ्गरुधिरो मज्जेत्सविष्टेह्रदे ।।

स्थाने सन्ध्यासुतीर्थेपितृतिथिसुविधौ होमकाले प्रदोषे
दोषघ्नं त्विदुमेव तर्पणविधौ धार्यं विभूत्या समम् ।
तन्न्यूनाधिकता भवेत(?)यदि चेत्सम्पूर्णमेतद्भवेत्
रुद्राक्षोत्तमधारणेन गिरिजे सत्यं त्रिसत्यं वदे ।। ११

वर्णी वनी गृहियती नियमेन *धार्य-
मेतद्रहस्य परमे न हि जातु तिष्ठेत् ।
रुद्राक्षधारणमिदं सुकृतैश्च लभ्यं
त्यक्त्वेदमेतदखिला नरकं प्रयान्ति ।। १२

यद्वंशसम्भवनरो भसितैकचारु-
रुद्राक्षकुण्डललसत्कवचोरुवक्षाः ।
तं पक्षपातसुदृशाप्यतिपापयुक्तं
पश्यन्ति तस्य पितरो मुदिताः कटाक्षैः ।। १३

यस्तूर्ध्वपुण्ड्रमलिकेऽपि बिभर्ति पाप-
सन्तापतप्तहृदयोऽपि सदा भवानि ।

---

* धृत्वामुक्तिं व्रजन्ति नियतं गिरिराजकन्ये ।

रुद्राक्षकण्ठवलयोऽपि सहारवक्षाः
कक्षाग्निमध्यपरिवर्ति तनुर्भवेत ।। १४

देवास्तन्मुखसङ्ख्यया सुविहितास्तस्य प्रसन्नाः शिवे
सन्ना एव हि सर्वपापगिरयस्तस्यारयो दुखिताः ।
रुद्रा एव भवन्ति रुद्रपरमा रुद्राक्षदेहाः सदा
रुद्राक्षोत्तमवक्षसा सुजपितो मन्त्रो विशिष्टार्थदः ।। १५

तन्मानाकृतिसङ्ख्यया च विहितो नित्यं शिवे पावनः ।। १६

तस्यामेव फलं भवेच्च सततं मद्रूप पञ्चाक्षरं
चावृत्या भसितेन देहगतकेनायुष्यवृद्धिर्भवेत् ।। १७

विष्णुब्रह्म सुरा ये पितृगणनिवहास्तन्नमस्यन्ति दूरात्
रुद्राक्षोत्तमवक्षसं द्विजवरं नीचं जनं वा शिवे ।
तं दृष्ट्वाभिभवन्ति राक्षसगणाः प्रेताः पिशाचास्तथा
रक्षन्त्येव सदा मुदा सुकृतिनं रुद्राक्षयुक्तं नरम् ।। १८

सङ्क्रान्तावयनद्वये शशिरविग्राहे सुपर्वस्वपि
धार्यं त्वेतदुशन्ति मे श्रुतिगिरः पुण्यं हि रुद्राक्षकम् ।
आयुष्यं त्विह पुत्र्यमग्र्यगतिदं द्रागेव यस्मान्नृणां
स्वर्ग्यं पापहरं सदैव विधृतं किं वच्मि तत्ते फलम् ।।

एकाक्षं शिरसा सदैव बिभृयात्पुण्यं सुरुद्राक्षकं
तस्या(तेना)नन्तमहाघसङ्घगिरयः कम्पन्ति भिन्दन्त्यपि ।

साक्षादक्षमुमे स्ववक्षसि धृतं त्र्यक्षप्रसादागतिं
प्राप्यानुक्षणमक्षिफालसुगिरिं यायान्नरो निर्मलः ।। २०

अर्वागामलकात्स्वतो लधुतराः क्षुद्रास्ततोऽप्यम्बिके
*सन्दष्टाः कृमिभिः त. . . . . . . . झिवशतं सदा ।
स्वर्णेनापि च राजतेन गिरिजे ताम्रेण वा मौक्तिकै
रत्नैर्विद्रुमस्फटिकाक्षमणिभिर्मध्यस्थितैर्धारयेत् ।। २१

नान्यत्सूतकशावयोर्मलजलोत्सर्गे तथा सङ्गमे ।
धार्या नोत्तम मालिकाः श्रुतिगता विप्रैः सदैवादरात् ।। २२

।। इति श्रीशिवरहस्ये दशमांशे रुद्राक्षमहिमा नाम
पञ्चविंशोऽध्यायः ।।



## ।। षड्विंशोऽध्यायः ।।

**स्कन्द उवाच -**

कैलासलाससदने देव्या पृष्टो महेश्वरः ।
शतरुद्रीयमाहात्म्यमभिषेकजपक्रमम् ।। १

अतिरुद्रमहारुद्रविधिमेकादशावृतः ।
जपाधिःकारिणं चापि प्रोक्तवान् परमेश्वरः ।। २

तत्तेऽहं सम्प्रवक्ष्यामि त्वमिहैकमनाः शृणु ।

**जैगीषव्य उवाच -**

कथं देव्या पुरा पृष्टः शिपिविष्टोऽष्टदेहकः ।। ३

श्रीरुद्रमन्त्रमाहात्म्यमुक्तवान् तज्जपे विधिम् ।
तन्मे विस्तरतो ब्रूहि निस्ताराय भवाम्बुधेः ।। ४

जैगीषव्यवचः श्रुत्वा सुब्रह्मण्योऽम्बिकासुतः ।
देव्यै देवेन कथितमुवाच विधिविस्तरम् ।। ५

**सुब्रह्मण्यः उवाच -**

कैलासशिखरे देव्या पृष्टो रुद्रविधिं हरः ।
सन्तुष्टेनैव मनसा प्राह देवो महेश्वरः ।। ६

**उमा उवाच -**

देवदेव महादेव शूलपाणे जगत्प्रभो ।
श्रीरुद्राणां च माहात्म्यं वद मे करुणार्णव ।। ७

अभिषेके जपे चैव महारुद्रातिरुद्रके ।
भूरिपापहरा शम्भो श्रुतिर्मे याजुषी वर ।। ८

पापानां नाशिनी देव रुद्रैकादशिनी विधिः (?) ।

**स्कन्द उवाच -**

तदा देव्या वचः श्रुत्वा प्राह देवो महेश्वरः ।। ९

रुद्रातिरुद्रमाहात्म्यं जाप्ये चैवाभिषेचने ।

**ईश्वर उवाच -**

शतरुदीयमाहात्म्यमधुना सम्प्रवक्ष्यते ।। १०

यस्य विज्ञानमात्रेण पापनाशः प्रजायते ।
ऋग्वेदे च यजुर्वेदे सामाथर्वणवेदके ।। ११

सारात्सारतरं पुण्यं शतरुद्रीयमीरितम् ।
अनधीता श्रुतिर्येन स्यादधीतस्य नाशनम् ।। १२

स वेदबा(ह्य) इत्युक्तः सर्वकर्मबहिष्कृतः ।
*यस्य याऽऽतिमहाविद्या शतरुद्रीयनामिका ।। १३

तेनाभ्यस्ताश्चतुर्वेदा अनधीता अपि द्विज ।
जप्यते शतरुद्रीयं येन नित्यं द्विजोत्तम ।। १४

स एव देवपित्र्यादिकर्मण्यो नात्रसंशयः ।
उपास्य नित्यं गायत्रीं प्रजप्य शतरुद्रियम् ।। १५

ब्रह्मर्षित्वमयं प्राप्य ब्रह्मभूयाय कल्पते ।
त्यक्त्वा यः शतरुद्रीयं अन्यज्जप्तुमिहेच्छति ।। १६

स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः ।
त्यक्त्वा यः शतरुद्रीयं अन्यज्जप्यमिहेच्छति ।। १७

---

* येनाधीता महाविद्या इति पाठः सुसङ्गतो भवेत् ।

तटाकस्थं जलं त्यक्त्वा मृगतृष्णासु धावति ।
त्यक्त्वा यः शतरुद्रीयमन्यज्जप्यमिहेच्छति ।। १८

कामधेनुपयस्त्यवत्वा खरक्षीराय धावति ।
त्यक्त्वा यः शतरुद्रीयं अन्यज्जप्तुमिहेच्छति ।। १९

स हेमभारं त्यक्त्वासावयः पिण्डाय धावति ।
ब्रह्मादयःसुराः सर्वे वसिष्ठाद्या ऋषीश्वराः ।। २०

सनकाद्याश्च योगीन्द्रा जीवन्मुक्ताःशुकादयः ।
ब्रह्मर्षयो मरीच्याद्या नारदाद्याः सुरर्षयः ।। २१

यक्षकिन्नरगन्धर्वसिद्धविद्याधरादयः ।
प्रजप्य शतरुद्रीयं श्रुतिसार महोदयम् ।। २२

अवाप्य सकलान् कामान् जपन्त्यद्यापि सर्वदा ।
कृते युगेतु ऋग्वेदमन्त्रा जप्याः सदा द्विजैः ।। २३

अथर्वाङ्गिरसा विद्या जप्यास्त्रेतायुगे सदा ।
प्रजप्तव्यानि सामानि युगे द्वापरनामके ।। २४

प्रजप्तव्यो यजुर्वेदो युगेऽस्मिन् कलिनामके ।
वेदाः सर्वेऽपि जप्तव्या युगेषु त्रिषु च द्विजैः ।। २५

शतरुद्रीयमभ्यस्येत्सततं नियमेन यः ।
स एव विप्रो लोकेषु पूज्यो वन्द्यो न संशयः ।। २६

स व्रती स तपस्वी च स्तोतव्यः स यतिः प्रियः ।
स चाचार्यः स मतिमान् स ज्ञानी स च साधकः ।। २७

स यज्वा स च पूतात्मा स दैवज्ञः स मान्त्रिकः ।
स योगी स च देवर्षिः स ब्रह्मर्षिः सुरोत्तमः ।। २८

स ब्रह्मा स विधाता च स विष्णुः शङ्करो द्विजाः ।
तत्कुलं पावनं नित्यं धन्या तज्जननी सदा ।। २९

तत्पिता च कृतार्थः स्यान्मुक्तास्तत्पितरो द्विजाः ।
पुण्यास्तद्वंशजाः सर्वे पूतास्तन्मित्रबान्धवाः ।। ३०

किमत्र बहुनोक्तेन सारं वक्ष्ये मुनीश्वराः ।
शतरुद्रीयजप्तारं दृष्ट्वा स्पृष्ट्वा स्मरन्नपि ।। ३१

सम्भाष्य वा समाप्नोति राजसूयाधिकं फलम् ।
यस्मिन्देशे स्थिता विप्राः शतरुद्रीयजापकाः ।। ३२

दिव्यक्षेत्रं तदुद्दिष्टं समन्ताद्योजनायुतम् ।
तत्रैव देवास्तिष्ठन्ति वेदा यज्ञाः समन्त्रकाः ।। ३३

मुनयः [1]सिद्धयस्तत्र ऋषयः पितृभिः सह ।
इदं च परमं श्रेयः इदमेव परं तपः ।। ३४

इदमेव परं तीर्थं इदमेव महद्व्रतम् ।
इदमेव परा दीक्षा [2]इदमेव परा गतिः ।। ३५

इदमेव [3]परो योगः इदमेव परं सुखम् ।
इदमेव परं पुण्यमिदमेव महत्फलम् ।। ३६

---

1. मुनयश्चैव सिद्धास्च । 2. इयमेव परागतिः ।
3. अयमे परो योगः

अयमेव सदाचारः अयमेव महामखः ।
अयं सर्वोपनिषदां सारभूतार्थसङ्ग्रहः ।। ३७

निर्मलं निर्गुणं नित्यं निष्कलं च निरञ्जनम् ।
अनन्तमव्ययज्योमिर्मनोवाचामगोचरम् ।। ३८

आदिमध्यान्तरहितं सर्वभूतहृदि स्थितम् ।
स्वप्रकाशं परं ब्रह्म सत्यानन्दचिदात्मकम् ।। ३९

सततं शतरुद्रीयजपात् साक्षात्प्रकाश्यते ।
ब्रह्महत्याशतं वापि सुरापानशतं तु वा ।। ४०

मातृहत्यादिकं वापि पितृहत्यादिकं तथा ।
शतरुद्रीयजपतो विनश्यति न संशयः ।। ४१

शतरुद्रीयमभ्यस्य नियतो नियताशनः ।
पुत्रपौत्रमयीमृद्धिमणिमादिगुणान्विताम् ।। ४२

अवाप्य जीवन्मुक्तः सन् राजते नात्र संशयः ।
नाष्टाङ्गयोगाभ्यासेन न दानेन नचेज्यया ।। ४३

न वैदैर्न्नागमैः शास्त्रैर्न पुराणैः सुविस्तरैः ।
[1]गतिर्भवति मर्त्यानां शतरुद्रीयजापिनाम् ।। ४४

वेदसारमिदं गुह्यं पावनं सर्वदेहिनाम् ।
महापापक्षयकरं महापुण्यफलप्रदम् ।। ४५

यजुर्वेदे चतुर्थेऽस्मिन्काण्डे प्रश्नो हि पञ्चमः ।
[2]अस्मिन्प्रश्नेशतरुद्रमन्त्रास्तिष्ठन्ति सिद्धिदाः ।। ४६

---

1. या गतिर्भविता नृणां शतरुद्रीयजापिनाम् ।
2. प्रश्नेऽस्मिन् शतरुद्रीयमन्त्रास्तिष्ठन्ति सिद्धिदाः ।

तस्मादेतद्वेदसारे शतरुद्रीयमीरितम् ।
शतरुद्रीयजपतो ब्रह्म साक्षात्प्रकाश्यते ।। ४७

जातिस्मरत्वमासाद्य भवेत्साक्षात्परः शिवः ।
शतरुद्रीयमाहात्म्यं किञ्चिदेतन्मयोदितम् ।। ४८

सर्वपाप प्रशमनं किं भूयः श्रोतुमिच्छथ ।। ४९

वेदक्षीरमहार्णवोद्यतदधिप्रोद्यत्सुमन्थानव-
च्छ्रीरुद्रान्तरमध्यसंस्थितमहापञ्चाक्षरावृत्तिभाक् ।
तन्मध्यस्थशिवाभिधानमसकृज्प्त्वा जनो मुक्तिभाक्
दूरात्पापमपाकरोति सततं शम्भोः प्रसादाद्द्विजः ।।

।। इति श्रीशिवरहस्ये दशमांशे
षड्विंशोऽध्यायः ।।



## ।। सप्तविंशोऽध्यायः ।।

**(जैगीषव्य)मुनिरुवाच-**

भगवन् सर्वतत्वज्ञ स्कन्द शङ्करसम्भव ।
काण्डे चतुर्थे यजुषि प्रश्नेऽस्मिन् पञ्चमे शुभे ।। १

रुद्रमन्त्राः शतं तस्माच्छतरुद्रीयमुच्यते ।
नामानि श्रोतुमिच्छामि तेषां स्कन्द महामते ।। २

**सूत उवाच -**

जैगीषव्यवचः श्रुत्वा स्कन्दः सूदिततारकः ।
नमस्कृत्य महादेवं प्रवक्तुमुपचक्रमे ।। ३

**स्कन्द उवाच -**

शतरुद्रीयमाहात्म्यं भूयो वक्ष्यामि ते श्रुणु ।
यस्य विज्ञानमात्रेण सिद्धिः करतले स्थिता ।। ४

वेदेषु शतरुद्रीयं देवतासु महेश्वरः ।
क्षेत्रेषु चाविमुक्तं मे मन्त्रःपञ्चाक्षरो वरः ।। ५

नृणां यथा द्विजो मुख्यो द्विजेष्वपि च शाम्भवः ।
पापनाशकरं विप्र यथा भस्मैव पावनम् ।। ६

भूषणेषु यथा मुख्यं रुद्राक्षं पावनं द्विज ।
पुराणेषु यथा स्कान्दं सर्वस्मृतिषु मानवी ।। ७

यथा प्रमाणं मानानां श्रुतिरेव सनातनी ।
इतिहासेषु परमं यथा शिवरहस्यकम् ।। ८

शतमस्मिन् महामन्त्रास्तिष्ठन्ति भुवि दुर्लभाः ।
ऋषिच्छन्दोदेवताभिर्विनियोगैः समन्वितम् ।। ९

जपेत्समग्रं नमकं समग्रं चमकं तथा ।
रुद्रमित्युच्यते सद्भिर्महाधौघविनाशनम् ।। १०

नमकं चमकेनैकेनानुवाकेन सञ्जपेत् ।
एकं(वं) एकादशावृत्त्या रुद्रैकादशिनी स्मृता ।। ११

रुद्रैकादशिनीं जप्त्वा तथैकादशिनीं पुनः ।
श्रीरुद्रमिति विद्वद्भिः कथ्यते भुक्तिमुक्तिदम् ।। १२

श्रीरुद्रैकादशावृत्त्या महारुद्रमुदाहृतम् ।
तथैकादशधा जप्तमतिरुद्रमिति स्मृतम् ।। १३

नामधेयानि वक्ष्यामि मन्त्राणां च पृथक् पृथक् ।
व्योमबीजादिको मन्त्रः प्रथमः परिकीर्तितः ।। १४

वामदेवर्षिसंयुक्तो द्वात्रिंशार्ण उदाहृतः ।
साम्बाख्यदेवतायुक्तोऽनुष्टुप्छन्दोऽष्टसिद्धिदः ।। १५

पवनादिस्तृतीयः स्याद्दैवतछन्दसान्वितः ।
अन्तर्यामीऋषिः साम्बशिवो देवोऽष्टसिद्धिदः ।। १६

चतुर्थो बायुबीजादिरनुष्टुप्छन्दसान्वितः ।
अभीष्टसिद्धिदः प्रोक्तो देवता त्रिपुरान्तकः ।। १७

अमृताद्यादिमो मन्त्रो गायत्रीच्छन्दसावृतः ।
तथैव सप्तचत्वारिंशद्वर्णोऽभीष्टार्थसिद्धिदः ।। १८

चतुर्मुखादिमं चैकचत्वारिंशाक्षरो मनुः ।
त्रिष्टुप्छन्दोयुतः षष्ठो भार्गवर्षिःसुरोत्तमाः । १९

रविदैवतको मन्त्रस्त्रिंशत्सप्तदशाक्षरः ।
भार्गवर्षिसमायुक्तो गायत्रीछन्दसावृतः ।। २०

सृष्टिकर्त्रादिमोऽभीष्टसिद्धिदः सम्प्रकीर्तितः ।
मूलादिमो महामन्त्रः कण्वर्षिर्भयनाशकः ।। २१

पङ्क्तिश्छन्दस्समायुक्तो नीलकण्ठः सुरोऽष्टमः ।
अग्निबीजसमायुक्तो वायुबीजादिमो मनुः ।। २२

दधीचि(च)ऋषिसंयुक्तश्छन्दसानुष्टुभान्वितः ।
त्रिपुरान्तकदेवोऽसौ नमच्छत्रुविनाशनः ।। २३

विष्ण्वादिदेवतायुक्तो दशमो गायत्रसंयुतः ।
सहस्राक्षःसुरःशत्रुक्षयकृद्दशमो मनुः ।। २४

अमृतादिमहामन्त्रः फङ्क्तिच्छन्दस्समन्वितः ।
कपर्दिदेवः कण्वर्षिःसदाविजयसिद्धिदः ।। २५

अग्न्यादित्यमहामन्त्रः ऋषिनारदसंयुतः ।
गायत्रीछन्दसायुक्तो विरूपाक्षः सुरस्तथा ।। २६

आयुरारोग्यसंसिद्धिप्रदो द्वात्रिंशदीरितः ।
मकारान्त्या रमाविध्या दधीचिऋषिसंयुता ।। २७

दैवत(?) छन्दसा युक्ता पिनाकिसुरसंयुता ।
त्रयोदशीति कथिता तारणे जयदायिनी ।। २८

मरुदादिमहाविद्या पङ्क्तिच्छन्दस्समन्विता ।
पिनाकिदेवतायुक्ता गौतमर्षिसमन्विता ।। २९

चतुर्दशीति कथिता वैश्यसेव्यप्रदायिनी ।
नमो हिरण्येत्यारभ्य सत्वनां पतये नमः ।। ३०

एतत्पदान्ता विद्यस्यात्पार्वतीशः सुरःस्मृतः ।
चतुर्मुखर्षिसंयुक्ता विराट्छन्दस्समन्विता ।। ३१

हृदयादिपदोपेता श्वपतिभ्यश्च वो नमः ।
एतदन्तामहाविद्या षोडशी समुदीरिता ।। ३२

नारदर्षिसमायुक्तस्त्रिष्टुप्छन्दस्समन्वितः ।
अनुवाकश्चतुर्थः स्याद्विद्या सप्तदशी स्मृता ।। ३३

कुमारर्षिसमायुक्ता बार्हतछन्दसा युता ।
महादेवः सुरः सर्वग्रहदोषनिवारिणी ।। ३४

अष्टादशमहाविद्या अनुवाकस्तु पञ्चमः ।
गणेशर्षिसमायुक्ता त्रिष्टुप् छन्दस्समन्विता ।। ३५

महारुद्रसुताः सर्वे सिद्धिदाऽज्ञाननाशिनी ।
षष्ठोऽनुवाक एकोनविंशोमन्त्रः स ईरितः ।। ३६

वसिष्ठर्षिसमायुक्तस्त्रिष्टुप्छन्दस्समन्वितः ।
परमेश्वरदेवोऽसौ सर्वसम्प्रत्प्रदायकः ।
एकविंशो महामन्त्रोह्यनुवाकस्तथाष्टमः ।। ३७

वामदेवर्षिसहितो जगतीछन्दसा वृतः ।
उमामहेश्वरसुरश्चिन्तितार्थफलप्रदः ।। ३८

एतन्मध्यगता विद्या शैवपञ्चाक्षरी शुभा ।
ब्रह्मविद्या भक्तिदायिनी सर्वसिद्धिदा ।। ३९

वामदेवर्षिसहिता पङ्क्तिछन्दस्समन्विता ।
(नमो वर्ष्यायप्रथमा)
नमो वर्ष्यायमीवत्केभ्य इत्यन्तसंयुता
श्रीरुद्रर्षिसमायुक्ता गायत्रीछन्दसान्विता ।। ४३

सर्वप्रथमसंस्तुत्यसाम्बशङ्करदेवता ।
महासिद्धिप्रदा साक्षाच्छङ्करत्वप्रदायिनी ।। ४४

द्रापे अन्धस इत्येषा मुनिब्रह्मसमन्विता ।
गायत्रीछन्दसा युक्ता स्कन्ददैवतसंयुता ।। ४५

दारिद्र्य परमैश्वर्यदायिनी ।
यातेरुद्रेति  विद्या स्यात्सूर्यनारायणात्मिका ।। ४६

गायत्रीछन्दसा युक्ता भार्गवर्षिसमन्विता ।
सर्वरोगक्षयकरी मनश्चिन्तितसिद्धिदा  ।। ४७

इमा इति महाविद्या शङ्करर्षिसमन्विता ।
विराट्छन्दोयुता सौख्यसिद्धिदा रुद्रदेवता ।। ४८

मृडानोरुद्रो विद्या स्यात्सङ्कर्षणमुनिस्तुता ।
कालाग्निरुद्रदेवीस्याज्जागतछन्दसान्विता ।। ४९

आधिव्याधिहरी नृणां दीर्घायुष्यप्रदायिनी ।
मानो महान्तमिति च विद्या सूर्यर्षिसंयुता ।। ५०

साम्बशङ्करदेवेशा ककुप् छन्दः समन्विता ।
पितृमातृसुत भ्रातृ वियोगक्षयकारिणी ।। ५१

मानस्तोके महाविद्या वरुणर्षिसमन्विता ।
रुद्रदैवतसंयुक्ता दैव(?)च्छन्दस्समन्विता ।। ५२

गर्भपातक्षयकरी सुतायुष्यविवर्धिनी ।
आराते गोध्न इत्येषा विद्या ब्रह्मर्षिसंयुता ।। ५३

गायत्रीछन्दसा युक्ता शिवदैवतसंयुता ।
अजागोमहिषीमत्तगजाश्वत्राणकारिणी ।। ५४

स्तुहिश्रुतमितिह्येषा दक्षिणामूर्तिदेवता ।
ऋषिः प्रजापतिस्तूक्ता गायत्रीछन्दसान्विता ।। ५५

अज्ञाननाशिनी सर्वविद्या सिद्धिप्रदायिनी ।
परिण प्रथमा विद्या कण्वकर्षिप्रपूजिता ।। ५६

रुद्रदैवतसंयुक्ता नृचिद्गायत्रसंयुता ।
मीढुष्टमेति विद्या स्याद्विवस्वदृषिसंयुता ।। ५७

साक्षात्कारकरी शम्भोर्गायत्रीछन्दसान्विता ।
विकिरीतिमहाविद्या मुनिब्रह्मप्रपूजिता ।। ५८

गायत्रीछन्दसा युक्ता वीरभद्राधिदेवता ।
सहस्राणि सहस्रेति विद्या भद्रर्षिपूजिता ।। ५९

विराट्छन्दःसमायुक्ता परशङ्करदेवता ।
सहस्राणीति विद्या स्याच्चतुर्वर्गफलप्रदा ।। ६०

वीरभद्रर्षिसंयुक्ता महारुद्राख्यदेवता ।
विराजछन्दसा युक्ता यद्वा सर्वत्र पूजिता ।। ६१

अस्मिन्महत्यादि विद्या नीलग्रीवाधिदेवता ।
पराशरर्षिसहिता गायत्रीछन्दसान्विता ।। ६२

नीलग्रीवा इति प्रोक्ता महाविद्या फलप्रदा ।
कपलर्षिस्तुता वामदेव देवी नृचिद्युता ।। ६३

ये भूतानामधीत्येषा मार्कण्डेयमुनिस्तुता ।
मृत्युञ्जयाख्यदेवीस्याद्गायत्रीछन्दसान्विता ।। ६४

ये पथां पथि विद्यास्यादापद्घ्नी रुद्रदेवता ।
वामदेवर्षिसहिता पङ्क्तिच्छन्दस्समन्विता ।। ६५

(य एतावन्तश्च विद्यास्या)
य एतावन्तश्च इत्याद्या विद्या श्रीरुद्रदेवता ।
ऋषिकण्वसमभ्यर्च्या जगतीच्छन्दसान्विता ।। ६६

नमो रुद्रेभ्य इत्येषा विद्या श्रीरुद्रदेवता ।
सङ्कर्षणमुनिस्तुत्या गायत्रीछन्दसान्विता ।। ६७

सर्वाधिव्याधिशमनी चतुर्वर्गफलप्रदा ।
एता विद्या मयाऽऽख्याताः शतरुद्रीयमध्यगाः।। ६८

एकादशानुवाकेभ्यो विद्याशतमजायत ।
समग्रं नमकं मालामन्त्ररूपं द्विजोत्तम ।। ६९

शतरुद्रीयमित्युक्तं वेदसारं महोदयम् ।
शान्त्यर्थं शं च मे सूक्तं पठित्वादौ द्विजोत्तमाः ।। ७०

प्रजपेच्छतरुद्रीयं त्रयीसारमनुत्तमम् ।
मयैषां सर्वमन्त्राणां छन्दर्ष्यादिकमीरितम् ।। ७१

उक्तानि(नां) नामधेयानि(नां) माहात्म्यं वक्ष्यतेऽधुना ।।

माल्लिङ्गं त्वभिवीक्ष्य रुद्रजनमोवाक्यैः स्तुवन् भक्तितः
शम्भुं शाम्भवसत्तमोत्तमपदं प्राप्नोति रुद्रं जपन् ।
"रुद्रेण" प्रणमन् प्रदक्षिणविधिं कुर्वन् महापातकै-
र्मुक्तः श्रीशतरुद्रमन्त्रजपकृच्छम्भोरथान्ते गणः ।।

।। इति श्रीशिवरहस्ये दशमांशे
सप्तविंशोऽध्यायः ।।



## ।। अष्टाविंशोऽध्यायः ।।

**स्कन्द उवाच -**

शतरुद्रीयमाहात्म्यं पुनर्वक्ष्ये मुनीश्वर ।
शृण्ष्व श्रद्धया युक्तो यदीच्छसि भवक्षयम् ।। १

शान्त्यर्थं शंच मे सूक्तं जप्त्वादौ मुनिपुङ्गव ।
प्रजपञ्छतरुद्रीयं समग्रं नमकं तथा ।। २

शम्भोरुपासना पञ्चविधा प्रोक्ता महर्षिभिः ।
अस्मिन् समग्रनमके नामानि त्रिशतं द्विज ।। ३

तिष्ठन्ति श्रुतिसाराणि भुक्तिमुक्तिकराणि हि ।
एतैर्यो नामभिर्लिङ्गे स्थावरे जङ्गमेऽपि वा ।। ४

पूजयेत्सा महापूजा तया प्रीणाति शङ्करः ।
मयोक्तैः शतसङ्ख्याकैर्मन्त्रैः शङ्करदैवतैः ।। ५

छन्दर्ष्यादिकमुक्त्वादौ ज्वलिते जातवेदसि ।
स्वाहान्तैर्जुहुयाद्रुद्रायेदन्नमम कथ्यते (?) ।। ६

एवं होमेन गौरीशः प्रीणाति फलदायकः ।
तर्पयेच्छतरुद्रीयमध्यगैः शतमन्त्रकैः ।। ७

श्रीरुद्रं तर्पयामीति प्रोच्चरन् सुसमाहितः ।
उपासनेयमितिस्याद्यासा सर्वफलदायिनी ।। ८

न्यासः स्यान्मन्त्रसन्नाहो न्यासहीनो न सिद्धिदः ।
बोधायनकृतं स्तोत्रं शतरुद्रीयदीपनम् ।। ९

बोधायनोक्तमार्गेण न्यासं कृत्वा विचक्षणः ।
प्रजप्य शंचमे सूक्तमादौ विघ्ननिवृत्तये ।। १०

समग्रनमकस्यास्य वेदसारस्य ब्राह्मणाः ।
सवामदेवो योऽघोर ऋषिरित्युच्यते बधैः ।। ११

छन्दांसि चास्य गायत्री पङ्क्त्यनुष्टुभ एव च ।
जगती बृहती चेति देवता कथ्यते ततः ।। १२

जपाकुसुमसाहस्रसन्निभे सूर्यमण्डले ।
मध्यरूपी विराड्रूपी विधिविष्णुशिवात्मकः ।। १३

योऽसावादित्यपुरुषः श्रीरुद्राख्यः परः शिवः ।
परमेश्वरः (शः) स विज्ञेय शिवः सत्यं चिदात्मकम् ।। १४

समग्रनमकस्यास्य कथितं दैवतं द्विजाः ।
प्रीत्यर्थं परमेशस्य विनियोग उदाहृतः ।। १५

ऋषिच्छन्दोदैवतानि विहितानि समाहितः ।
ध्यायेन्निरामयं वस्तु सर्गस्थितिलयाधिकम् ।। १६

यदेव व्यवहाराणामाधारं प्रकृतेः परम् ।
निर्गुणं निष्कलं नित्यं मनोवाचामगोचरम् ।। १७

परं तेजोऽहमस्मीति ध्यात्वैवं मुनिपुङ्गवाः ।
सगुणं हृदये ध्यायेद्ब्रह्मरन्ध्रेऽथवा प्रभुम् ।। १८

शुद्धस्फटिकसङ्काशं मध्याह्नादित्यसन्निभम् ।
स्वसंवेद्यमनाद्यन्तं श्वेतपद्मायुतप्रभम् ।। १९

गङ्गाधरं शशिधरं जटामकुटभूषितम् ।
श्वेतभूतित्रिपुण्ड्रेण विराजितललाटकम् ।। २०

लोचनत्रयसम्पन्नं स्वर्णकुण्डलशोभितम् ।
बिम्बाधरं चतुर्बाहुं मुक्ताहारोपशोभितम् ।। २१

अक्षमालांसुधाकुम्भं चिन्मयीं मुद्रिकामपि ।
पुस्तकं च भुजैर्दिव्यैर्दधानं पार्वतीपतिम् ।। २२

शुक्लयज्ञोपवीतेन श्वेतवस्त्रेण शोभितम् ।
श्वेताम्बरधरं श्वेतं रत्नसिंह्मासने स्थितम् ।। २३

वीरासने समासीनं विराड्रूपिणमीश्वरम् ।
सन्तप्तहेमरुचिरस्वङ्गुलीयकभूषितम् ।। २४

मुक्तामाणिक्य सौवर्णकाञ्चीदामविराजितम् ।
योगिभिः सनकाद्यैश्च स्तूयमानमहर्निशम् ।। २५

दातारं सर्वविद्यानां सकलैश्वर्यदायकम् ।
सर्वाभीष्टप्रदाचारं वटमूलनिवासिनम् ।। २६

सत्यानन्दचिदात्मानं शङ्करं परमेश्वरम् ।
वामाङ्के संस्थितां गौरीं बालार्कायुतसन्निभाम् ।। २७

जपाकुसुमसाहस्रसमानश्रियमीश्वरीम् ।
सुवर्णरत्नखचितमकुटेन विराजिताम् ।। २८

ललाटपटट्सम्राजत्संलग्नतिलकाङ्किताम् ।
भ्रमद्भ्रमरनीलाभधम्मिल्लालकशोभिताम् ।। २९

सौन्दर्यभ्राजत्कामेश कोदण्डभ्रूयुगान्विताम् ।
राजीवायतनेत्रां तां नीलोत्पलदलेक्षणाम् ।। ३०

मुक्तामाणिक्यखचित नासिकाभरणान्विताम् ।
पक्वबिम्बफलाभास्वदधर द्वयराजिताम् ।। ३१

दाडिमीबीजसङ्काशद्वात्रिंशद्दन्तशोभिताम् ।
सन्तप्तहेमखचित ताटङ्काभरणान्विताम् ।। ३२

कुण्डलद्वयसंशोभिकर्णयुग्मविराजिताम् ।
ताम्बूलचर्वणरतां नवरत्नविराजिताम् ।। ३३

आढ्य(द्य)भूषण सौवर्ण चित्रकाभरणान्विताम् ।
पदकाभरणोपेतां मुक्ताहारोपशोभिताम् ।। ३४

इक्षुकार्मुकपुष्पेषुचापबाणशरावरैः ।
दिव्याङ्गुलीयकयुतैः केयूरयुगलान्वितैः ।। ३५

स्वर्णकङ्कणसंयुक्तैश्चतुर्भिर्बाहुभिर्युताम् ।
सुवर्णरत्नखचितकाञ्चीघण्टा(ण्टी)विराजिताम् ।। ३६

सौभाग्यभूषणयुतां सूक्ष्ममध्यविराजिताम् ।
रक्तचन्दनसंलिप्तहेमकुम्भोपमस्तनीम् ।। ३७

रक्तवस्त्रपरीधानां रक्तमाल्यविभूषिताम् ।
तनुमध्यां पृथुश्रोणीं शिववामाङ्कसंश्रयाम् ।। ३८

कदलीललितस्तम्भसन्निभोरुयुगान्विताम् ।
सुवर्णपादकटकयुगलेन सुशोभिताम् ।। ३९

सन्तप्तहेमपादाङ्गुलीयकैः सुविराजिताम् ।
पूर्णचन्द्रमुखीमम्बां सुस्मितास्यविराजिताम् ।। ४०

ब्रह्मविष्णुमहेन्द्रादिशिरोमकुटजातया ।
श्रिया विराजितपदां भक्तत्राणपरायणाम् ।। ४१

स्वकान्त्या शङ्करं देवं पुनरप्यरुणीकृतम् ।
सर्वालङ्कारसुभगं युवानमतिसुन्दरम् ।। ४२

छत्रेण शोभितं मूर्ध्नि चामराभ्यां विराजितम् ।
ब्रह्मविष्णुमहेन्द्रादिवन्द्यमानपदाम्बुजम् ।। ४३

सृष्टिस्थित्युपसंहारहेतुभूतं सनातनम् ।
अन्योन्याश्लिष्टहृद्बाहुं गौरीशङ्करसंज्ञितम् ।। ४४

सनातनं परंब्रह्म परमात्मानमव्ययम् ।
नमामि जगतामीशं परमात्मनमव्ययम् ।। ४५

एवं ध्यात्वा जपेन्नित्यं शतरुद्रीयमादरात् ।
नमकं रुद्रसङ्ख्याकाननुवाकाञ्जपेत्ततः ।। ४६

एकवारं द्विवारं वा त्रिवारं चमकान्वितम् ।
नमकं प्रजपेदेषा जपोपास्तिरितीरिता ।। ४७

शिवप्रीतिकरा श्रेष्ठा श्रीरुद्रैक्यप्रदायिनी ।
स्थावरे जङ्गमे लिङ्गे समाहितमनाः शुचिः ।। ४८

न्यासध्यानादिसहितं शंचमे सूक्तपूर्वकम् ।
प्रजपञ्छतरुद्रीयमभिषेकं समाचरेत् । ४९

एकवारं द्विवारं वा त्रिवारं चमकान्विता ।
उपास्तिः पञ्चमी प्रोक्ता शम्भोः प्रीतिकरी शुभा ।। ५०

विशेषमन्त्रान् वक्ष्यामि शृणुध्वं द्विजपुङ्गवाः ।
जप्त्वा समग्रनमकं शतरुद्रीयमुत्तमम् ।। ५१

चमकस्यानुवाकस्य चैकमेकं ततो जपेत् ।
रुद्रैकादशिनीमेतां प्रजपञ्छङ्करोपरि ।। ५२

करोति योऽभिषेकं हि नियमेनैकमण्डलम् ।
स महापातकैस्त्यक्तो राजसूयफलं लभेत् ।। ५३

शतमन्त्रैश्चतुर्वारं जुहुयात्पायसं शुभम् ।
रुद्रसङ्ख्यानुवाकैश्च जपहोमार्चनं ततः ।। ५४

मधुत्रितयसंयुक्तं महापापैः प्रयुच्यते ।
अभिषेकं केवलं वा मण्डलं यः करोति हि ।। ५५

इह भुक्त्वाऽखिलान्भोगान् परेब्रह्मणिलीयते ।
पूजयाभ्यधिको होमो होमात्तर्पणमुत्तमम् ।। ५६

तर्पणाच्च जपः क्षेष्ठो ह्यभिषेकः परो जपात् ।
रुद्रैकादशनीं जप्त्वा प्रजपेच्छान्तिपञ्चकम् ।। ५७

अन्यथा तस्य संसिद्धिर्नास्ति नास्ति तपोधनाः ।
यदा भक्त्युदयो नृणां तदोपस्तिं समाचरेत् ।। ५८

चतुरस्त्रं वरं कुण्डं होमकाले विधीयते ।
गणेशमादौ सम्पूज्य कृत्वा नियममेव च ।। ५९

उपासनापञ्चकार्यं कृत्वा नियममादितः ।
समग्रं नमकं प्रातः प्रजपेच्चमकान्वितम् ।। ६०

स महापातकैर्मुक्तः शिवसायुज्यमश्नुते ।
मध्याह्ने प्रजपेद्यस्तु चमकेन युतं द्विजाः ।। ६१

स सूर्यमण्डलं भित्वा गणानामग्रणीर्भवेत् ।
सायङ्काले जपेद्यस्तु नमकं चमकान्वितम् ।। ६२

अवाप्य सकलान्भोगान् परेब्रह्मणि लीयते ।
भूतिभूषितसर्वाङ्गो लिङ्गपूजारतः शुचिः ।। ६३

नमकं चमकं नित्यं प्रजपेत्फलदायकम् ।
वेदसाराणि नामानि कथितान्यत्र तानि हि ।। ६४

एतज्जाप्यमृतो भूत्वा ब्रह्मभूयाय कल्पते ।
एतेन शतरुद्रीयं न्यासध्यानादिकं शुभम् ।। ६५

मयोक्तं ब्राह्मणश्रेष्ठाः किं पुनः श्रोतुमिच्छथ ।। ६६

एकावृत्त्याऽघनाशो भवति गिरिसुते तद्द्वये वै गणेन्द्रः
कैलासं प्रविशेच्चतत्त्रितयतः श्रीरुद्रजापी नरः ।
षड्वारं प्रजपंश्च मुक्तिफलभाग् भूयो भवेच्छाम्भवः
श्रीरुद्रार्चनतः सुबिल्वकुसुमैर्लिङ्गे च साक्षाच्छिवः ।।

छन्दोदैवतसर्षिकं मनुगणं जप्त्वा भवेत्पावनः
नैतद्वेद यदि श्रुतीशतगतं जप्ताश्च ते निष्फलाः ।
तस्माद्ज्ञानत एव वित्त तदिमं जप्त्वा विमुक्तो भवेत्
हुत्वा चाप्यभिषिच्य वा द्विजवरो विन्देत सर्वं फलम् ।।

।। इति श्रीशिवरहस्ये दशमांशे अष्टाविंशोऽध्यायः ।।



## ।। एकोनत्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

शतरुद्रस्य माहात्म्यं भूयो वक्ष्यामि ते श्रृणु ।
कथितं संश्रुतं यैस्तु तेषां पापं प्रणश्यति ।। १

साक्षात् त्र्यक्षप्रिये वेदे मध्यगं शतरुद्रियम् ।
शतरुद्रीयमाहात्म्यं शिवप्रोक्तं सनातनम् ।। २

निष्कृतिं सर्वपापानां यदि कर्तुमिहेच्छसि ।
शतरुद्रीयमभ्यस्य सर्वपापैः प्रमुच्यते(ताम् )।। ३

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
तत्संसर्ग इति प्रोक्तं महापातकपञ्चकम् ।। ४

ज्ञानज्ञानकृतं पापं द्विविधं परिकीर्तितम् ।
ब्रह्महत्या ज्ञानकृता विप्रस्य यदि जायते ।। ५

भस्मधृग्भस्मशायी च त्रिपुण्ड्राङ्कोऽनुतापवान् ।
रुद्रैकादशिनीं नित्यं प्रजपन् वासरत्रयम् ।। ६

तदन्ते दक्षिणां दद्यात् गवां शतवृषान्वितम् (ताम् ) ।
गवामभावे निष्कं स्यात्तदर्धं पादमेव वा ।। ७

तदभावे पुनर्मासत्रितयं प्रजपेच्छुचिः ।
ब्रह्महत्याविनिर्मुक्तो भवत्येव न संशयः ।। ८

श्रोत्रियं च द्विजं हत्वा ज्ञानपूर्वं द्विजोत्तम ।
प्राजापत्यत्रयं पूर्वं शरीरस्य विशुद्धये ।। ९

कृत्वा शरीरसंशुद्धिं कृत्वा चान्द्रायणं ततः ।
महान्यासविधिं कृत्वा रुद्रेणैव समाहितः ।। १०

सम्पूज्य स्थावरे लिङ्गे जङ्गमे वा समाहितः।
रुद्रैकादशिनीं नित्यं नियमेन समभ्यसेत् (?) ११

वर्षषट्कमधःशायी फलमूलाशनो जपन् ।
तदन्ते दक्षिणां दद्याद्गवां त्रिशतमेव वा ।। १२

एवं कृते विशुद्धात्मा स याति ब्रह्म शाश्वतम् ।
द्विविधं मद्यपानं स्याद् ज्ञानज्ञानकृतं भवेत् ।। १३

अज्ञानोद्भवपापस्य मद्यपानस्य कथ्यते ।
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणान्वितः ।। १४

रुद्रैकादशिनीं नित्यं वत्सरं प्रजपेद् द्विजः ।
तदन्ते दक्षिणां दद्याद्गवामेकोनविंशतिम् ।। १५

विमुच्यतेऽज्ञानकृतान्मद्यपानान्न संशयः ।
ज्ञानेन कृतपापस्य मद्यपानस्य कथ्यते ।। १६

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
आसामन्यतमां पीत्वा सुरापीति च कथ्यते ।। १७

भूतिभूषितसर्वाङ्गस्त्रिपुण्ड्राङ्को जितेन्द्रियः ।
प्राजापत्यं चरेत्कृच्छ्रं कृच्छ्रसान्तपनं ततः ।। १८

रुद्रैकादशिनीं नित्यमेकं संवत्सरं जपेत् ।
तदन्ते दक्षिणां दत्वा गवामेकोनविंशतिम् ।। १९

एकमासं दरिद्रश्चेद्रुद्रैकादशिनीं जपेत् ।
सुरापानाद् ज्ञानकृतान्मुच्यते नात्र संशयः ।। २०

स्वर्णस्तेयं तु द्विविधं ज्ञानाज्ञानसमुद्भवम् ।
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणः शुचिः ।। २१

जिताहारेन्द्रियो मौनी रुद्रैकादशिनीं जपेत् ।
तदन्ते दक्षिणां दद्यादष्टाविंशतिगाः शुभाः ।। २२

स्तेयेनाज्ञानजन्येन मुच्यते नात्रसंशयः ।
रुद्राक्षमालाभरणो भूतिभूषितदेहवान् ।। २३

प्राजापत्यं चरेत्कृच्छ्रं ब्रह्मचारी जितेन्द्रियः ।
षण्मासं नियताहारो रुद्रैकाशिनीं जपेत् ।। २४

तदन्ते दक्षिणां दद्याद्दश गावः सवत्सकाः ।
गवामभावे निष्कं स्यात्तदर्धं पादमेव वा ।। २५

दरिद्रश्चेत्पुनर्मासं रुद्रैकादशिनीं जपेत् ।
स्वर्णस्तेयाद् ज्ञानकृतान्मुच्यते नात्र संशयः ।। २६

गुरुपत्नीगमनजं ज्ञानाज्ञानकृतं द्विधा ।
कण्ठदघ्ने जले स्थित्वा षण्मासं नियतेन्द्रियः ।। २७

रुद्रैकादशिनीं नित्यं प्रजपेदात्मशुद्धये ।
तदन्ते दक्षिणादेया दशगावः सवत्सकाः ।। २८

गुरुस्त्रीगमनात् ज्ञानकृतान्मुक्तो भवेत् ध्रुवम् ।
तत्संसर्गाभिधं पापं द्विविधं परिकीर्तितम् ।। २९

नित्यं त्रिषवणस्नायी मासमेकमन्द्रितः ।
भस्मरुद्राक्षभूषाढ्यस्त्रिपुण्ड्रपरिशोभितः ।। ३०

रुद्रैकादशिनीं नित्यं प्रजपेद्भूतिभूषितः ।
मासद्वयेन संसर्गाद्विविधादपि मुच्यते ।। ३१

आर्द्राणामप्यनार्द्राणां पापानां निष्कृतिर्वरा ।
पापानामुपपापानां सूक्ष्माणां महतामपि ।। ३२

असत्यस्तेयमित्रध्रुक् गोघ्नश्चैव कृतघ्नकः ।
परान्नादः शूद्रगामी सूत्रज्ञानपरो मुने ।। ३३

गणको गणिकाजीवी वैद्यविद्याविचक्षणः ।
परान्नादो गणान्नादो वार्धुर्षो हलजीवकः ।। ३४

भार्यात्यागी सुतत्यागी पङ्क्तिभेदकरो नरः ।
अग्नित्यागी दुरन्नादी सर्वजीवोपघातकः ।। ३५

तटाकारामभेत्ता च देवानां निन्दकस्तथा ।
वैश्वदेवश्राद्धहीनस्तथातिथिविवर्जितः ।। ३६

निन्दापरोऽभ्यसूयी च गुरुदेवद्विजन्मनाम् ।
राजद्रोही जनद्रोही गरदो पिशुनः खलः ।। ३७

रसानां च तिलानां च विक्रेता गोर्गजाश्वयोः ।
स्तन्यापहारी कुण्डाशी विधुरो वृषलीपतिः ।। ३८

देवब्रह्मस्वहारी योऽनृजुर्वाक्छलो द्विजः ।
भस्मरुद्राक्षनिन्दाकृद् भृतकाध्यापकस्तथा ।। ३९

ग्रामणीः शूद्रयाजी च महादानप्रतिग्रही ।
सर्पहा जन्तुहा भ्रूणहा गोजीवोऽतिकामवान् ।। ४०

पुंसि गोषु खरे क्रोडे रेतोदः क्रोधनोऽशुचिः ।
तीर्थदूषकरो मर्त्यो गृहदाहरतिर्नरः ।। ४१

एते चान्ये च बहवः सङ्कराः पापवत्तराः ।
सङ्कलीकरणा ये च मलिनीकरणास्तथा ।। ४२

जातिभ्रंशकराश्चैवाप्यपात्रीकरणास्तथा ।
जाग्रत्स्वप्नसुषुप्तौ च जनितानां द्विजोत्तम ।। ४३

बाल्ययौवन कौमारवार्धकेषूद्भवान्यपि ।
पापानि नाशमायान्ति रुद्रैकादशिनीजपात् ।। ४४

प्रारब्धैः सञ्चितैः पापैर्मुच्यते रुद्रजापकः ।
भस्मच्छन्नस्त्रिपुण्ड्राङ्को मुच्यते सर्वपातकैः ।। ४५

कोटिजन्मकृतैः पापैर्महापापोपपातकैः ।
रुद्रजापी विमुच्येत फलं विन्देत सर्वदा ।। ४६

राजसूयाश्वमेधाभ्यामग्निष्टोमायुतस्य च ।
अवाप्य च फलं कृत्स्नं शिवे लीनो भविष्यति ।। ४७

स्कन्द उवाच -

ब्रह्मघ्नश्च कृतघ्नगोघ्नकनकस्तेयादिकृद्यो मुने
ब्रह्मस्थं शिवमीक्ष्य रुद्रजपकृत्पापैश्च मुक्तो भवेत् ।
स्नात्वा गाङ्गजलैर्भगघ्नपदहृत् तत्कण्ठदघ्नस्थितो
भस्माक्षादिविदिग्धसर्वतनुभाक् सन्दग्धपापो भवेत् ।।

पुण्येऽविमुक्तसदने मदनान्तकस्य
भक्त्यैव रुद्रजपकृत् सकलाघमुक्तः ।
*ते भैरवोरुवदनं भ्रुकुटीकराल-
मुद्याच्छशाङ्करदनैः कदनं न गच्छेत् ।। ४९

।। इति श्रीशिवरहस्ये दशमांशे
पञ्चपातकनिष्कृतौ रुद्रमहिमा नाम
एकोनत्रिंशोऽध्यायः ।।



* न पश्येत् इति शेषः ।

## ।। त्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

अथ काम्यानि कर्माणि वक्ष्यामि मुनिपुङ्गव ।
स्नात्वा शुक्लाम्बरधरः समाहितमनाः शुचिः ।। १

भूतिभूषुतसर्वाङ्गो रुद्राक्षाभरणान्वितः ।
गायत्रीं प्रजपेन्नित्यमष्टोत्तरसहस्रकम् ।। २

नित्याग्निहोत्रं कृत्वाथ ब्रह्मयज्ञमतः परम् ।
सन्तर्प्य पितृदेवर्षीन् जैगीषव्य महामुने ।। ३

सम्पूज्य विधिवल्लिङ्गे रुद्राकादशिनीं जपेत् ।
ऋङ्मन्त्रं यजुषो मन्त्रं सामान्याथर्वणान्मनून् ।। ४

त्रिंशद्दिनानि जप्त्वा तु शीघ्रं शत्रून् विनाशयेत् ।
सम्पूज्य स्फटिके लिङ्गे शुभ्रपुष्पैर्मनोरमैः ।। ५

नैवेद्यं पायसं दत्वा कृत्वान्यासादिकं शुभम् ।
रुद्रैकादशिनीं जप्त्वा षण्मासं विजितेन्द्रियः ।। ६

अधिपः सर्वविद्यानां मूकोऽपि भवति ध्रुवम् ।
जपन्नेकाग्रमनसा ध्यायन् देवमुमापतिम् ।। ७

व्याख्याता सर्वशास्त्राणां अश्रुतानां प्रजायते ।
सर्वान् वेदान् पुराणानि श्रवणेनैकदा मुने ।। ८

न विस्मरति सर्वत्र विद्या विद्येश्वराद्यथा ।
पीताम्बरधरो नित्यं भूतिभूषितदेहवान् ।। ९

रुद्राक्षमालाभरणो लिङ्गं मरकतोद्भवम् ।
प्रतिष्ठाप्य महापीठे सङ्कल्प्य सुसमाहितः ।। १०

प्राणायामत्रयं कृत्वा छन्दर्षिन्यासपूर्वकम् ।
रुद्रैकाजशिनीं नित्यं प्रजपन्नभिषेचयेत् ।। ११

पूजां बिल्वदलैः कुर्याच्छ्वेतपद्मसमन्वितैः ।
नैवेद्यं शर्करायुक्तं त्रिमधुप्लुतपायसम् ।। १२

दद्याच्छिवाय देवाय मासषट्कं दिनेदिने ।
एवं यः कुरुते नित्यं षण्मासं विजितेन्द्रियः ।। १३

अलक्ष्मीः कलहा घोरा दूराद्यान्त्येव तद्गृहात् ।
धनधान्याकुलां लक्ष्मीं गजाश्वपशुसंयुताम् ।। १४

अणिमादिगुणोपेतां महतीं श्रियमश्नुते ।
सन्ततिव्यापिनी लक्ष्मीरचला तस्य जायते ।। १५

अथातः पुत्रकामानां वक्ष्ये योगाननुत्तमान् ।
पूर्वजन्मकृतात्पापात्स्त्रियो वन्ध्या भवन्ति हि ।। १६

वन्ध्यात्वमृषिभिः प्रोक्तमङ्गनानां चतुर्विधम् ।
महावन्ध्या काकवन्ध्या कदली च मृतप्रसूः ।। १७

पुरुषस्यापि वन्ध्यत्वं चतुर्विधमुदीरितम् ।
या नारी बालकान् हन्ति सपत्न्यै च विषप्रदा ।। १८

सपत्नीगर्भविच्छित्तिं या करोत्यङ्गना द्विजाः ।
चतुर्विधैः सा वन्ध्या स्यात्पूर्वजन्मजदुष्कृतात् ।। १९

यो विप्रो विधवागन्ता भार्यात्यगं करोति यः ।
दासीगन्ता भवेद्यस्तु परनारीरतःसदा ।। २०

विप्रबालकहन्ता च विद्वत्पीडाकरः सदा ।
अनेन पूर्वपापेन वन्ध्यशुक्लो न संशयः ।। २१

तन्निमित्तं* प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
प्रातः स्नात्वा विशुद्धात्मा शुक्लाम्बरधरः शुचिः ।। २२

भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणान्वितः ।
ब्राह्मणान् वेदसम्पन्नाञ्छुभ्रवस्त्रानलङ्कृतान् ।। २३

आहूय वरयित्वैकमाचार्यं द्विजपुङ्गवम् ।
ऋत्विजो वरयेत्पश्चाद्दशसङ्ख्यान् द्विजोत्तमान् ।। २४

दद्याद्वासोयुगं तेभ्यः शुभे लग्ने शुभे दिने ।
कारयेदभिषेकं तैर्ब्राह्मणैर्वेदपारगैः ।। २५

एकादशदिने पश्चात् ब्राह्मणान् भोजयेदथ ।
अष्टाविंशोत्तरचतुः शतसङ्ख्यैरनुत्तमैः ।। २६

द्वादशे दिवसे होमं कारयेद् द्विजपुङ्गवैः ।
वसोर्धारां ततः कुर्यात् प्रजपन् चमकं द्विजाः ।। २७

सवत्सा दश गा दद्यात्कांस्यपात्रं च दक्षिणाम् ।
आचार्याय वृषं दद्यादलङ्कारादिकं शुभम् ।। २८

---

* तन्निमित्तीकृत्य या निष्कृतिः कार्या तामहं वक्ष्यामीति स्कन्दोक्त्यभिप्रायः ।

रुद्रैकादशिनीमेवमेकविंशोत्तरं शतम् ।
महारुद्रमिति प्रोक्तं महापातकनाशनम् ।। २९

एवं कृते न सन्देहो वन्ध्यात्वं नश्यति द्विजाः ।
महावन्ध्यापि लभते तस्मिन् संवत्सरे सुतम् ।। ३०

आयुष्मन्तं यशस्वन्तं लक्ष्मीवन्तं गुणान्वितम् ।
गोमूल्यमेकनिष्कं स्यात् तदर्धं पादमेव वा ।। ३१

यद्येकस्मिन् दिने कुर्युरेकविंशच्छतं द्विजाः ।
महारुद्रमिति प्रोक्तं सर्वदुष्कृतनाशनम् ।। ३२

रुद्रैकादशिनीं जप्त्वा तदन्ते शान्तिपञ्चकम् ।
तदन्ते पौरुषं सूक्तं नारायणमतः परम् ।। ३३

पञ्चब्रह्ममहामन्त्रान् त्वरितं रुद्रमप्यथ ।
त्रियम्बकं महामन्त्रं योरुद्र इति(इति) मन्त्रकम् ।। ३४

सर्वो वा इति विद्या स्यात्कद्रुद्रायेत्यतः परम् ।
नमो हिरण्यमन्त्रं च त्वरितं रुद्रमीरितम् ।। ३५

एतजद्जपेन साङ्गः स्याद्रुद्रैकादशिनी जपः ।
त्रिवारं यो महारुद्रं कारयेद्ब्राह्मणोत्तमैः ।। ३६

विनाशयत्यसौ स्त्रीणां वन्ध्यात्वं च चतुर्विधम् ।
पुरुषस्यापि वन्ध्यत्वं विनश्यति न संशयः ।। ३७

अचिरात्पुत्रमाप्नोति ह्यायुष्मन्तं यशस्विनम् ।
कारयेदतिरुद्रं यो ब्राह्मणैर्वेदपारगैः ।। ३८

तदन्ते हवनं कुर्युर्लक्षसङ्ख्यं द्विजोत्तमाः ।
धेनूनां त्रिशतं दद्यादाचार्याय वृषत्रयम् ।। ३९

वृषाभावे त्रिनिष्कंस्यान्मूल्यं कनकमीरितम् ।
धेन्वभावे तथानिष्कं स्वर्णमेकमुदीरितम् ।। ४०

ब्राह्मणान्भोजयेत्पश्चाद्दशसाहस्त्रमादरात् ।
एवं यः कुरुते विप्रो ह्यतिरुद्रमहोदयम् ।। ४१

सर्वपापानि नश्यन्ति कोटिजन्मार्जितान्यपि ।
आयुःश्रीकीर्तिसंयुक्तान् पुत्रपौत्राननुत्तमान् ।। ४२

अवाप्य सकलान्भोगान् लीयन्ते परमे शिवे ।
अशक्तश्चेत्स्वयं नित्यं रुद्रैकादशिनीं जपेत् ।। ४३

वत्सराल्लभते पुत्रमायुष्मन्तं यशस्विनम् ।
धर्माभिषेकं यः कुर्यात् शिवस्य परमात्मनः ।। ४४

स्वर्णपापविनिर्मुक्तः सम्प्राप्य पशुसम्पदम् ।
कैलासे शिवसान्निध्ये वसत्येव न संशयः ।। ४५

व्ययेन तपसा शम्भोरभिषेकं करोति यः ।
अणिमादिगुणमैश्वर्यं पुत्रपौत्रानमुत्तमान् ।। ४६

अवाप्य शिवसन्निध्यं वसन्त्यन्ते न संशयः ।
नारिकेलोदकेनैव ह्यभिषेकं करोति यः ।। ४७

स लब्ध्वा महतीं लक्ष्मीमायुष्मत्पुत्रपौत्रकान् ।
मेधां प्रज्ञां तदन्ते तु शिवसायुज्यमश्नुते ।। ४८

यः कुर्यान्मधुना शम्भोरभिषेकं द्विजोत्तमाः ।
स पुत्रपौत्रानचलां लक्ष्मीं विद्यां यशस्तथा ।। ४९

अवाप्य शिवसान्निध्यं रमते नात्रसंशयः ।
घृताभिषेकं यः कुर्याच्छिवस्य परमात्मनः ।। ५०

स ब्रह्मवर्चसं प्रज्ञां लक्ष्मीं पुत्रानवाप्नुयात् ।
इक्षूदकेनाभिषेकं य कुर्यात्परमात्मनः ।। ५१

स पुत्रपौत्रानासाद्य विद्यां लक्ष्मीमचञ्चलाम् ।
कैलासे शिवसान्निध्ये रमते नात्र संशयः ।। ५२

आम्रोदकेनाभिषेकं यः करोति जितेन्द्रियः ।
स सर्वपातकैर्मुक्तः पुत्रान् विद्यां महाश्रियम् ।। ५३

अवाप्य शिवसारूप्यं लभते नात्र संशयः ।
शुद्धोदकेनाभिषेकं शिवस्य कुरुते यदि ।। ५४

स सर्वाभीष्टमासाद्य शिवसायुज्यमश्नुते ।। ५५

सद्राजराजितजटं स्वकहृत्सरोजे
    राजीववत्सुपदमानसरुद्रजापी ।
पापं निरस्य चिरजं विरजो भवेत् स
    कैलासराजभवने भविता गणेन्द्रः ।। ५६

रुद्रातिरुद्रशतरुद्रमथातिरुद्र-
    मेकादशावृतिपरो प्रजपन् हि रुद्रम् ।
होमार्चनासु नियतःप्रजपन् विमुक्त्यै
    भूयाश्च शाम्भववरेषु विनिश्चयेन ।। ५७

।। इति श्रीशिवरहस्ये दशमांशे
त्रिंशोऽध्यायः ।।



## ।। एकत्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

होमेऽपि शं च मे सूक्तमा(सूक्तेना) दावेकाहुतिं चरेत् ।
नमस्ते प्रथमो मन्त्रो द्वितीयो यात इत्यथ ।। १

याते रुद्रेति विद्या स्याद्यमिषुं गिरिशं तथा ।
शिवेन वचसा त्वेति ह्यध्यवोचदथापरा ।। २

असौ यस्ताम्र इत्यन्या तथासौयो विसर्पति ।
नमो अस्त्विति मन्त्रोऽन्यः प्रमुञ्चेति परोमनुः ।। ३

अवतत्येति मन्त्रोऽन्यो विज्यं धनुरथापरः ।
याते हेतिस्तथा विद्या नमस्ते अस्त्वा तथा परः ।
परिते धन्वन इति नमो हिरण्यबाहवे ।। ४

नमोवृक्षेभ्य इत्यन्यो नमस्सस्पिञ्जराय च ।
सा नमो बभ्लुशायेति नमो हरिकेशाय इत्यपि ।। ५

नमो भवस्य हेत्यै सा नमो रुद्राय मन्त्रकः ।
नमः सूताय विद्यान्या नमो रोहिताय इत्यथ ।। ६

सा नमो मन्त्रिणे विद्या नमो भुवन्तये परः ।
नम उच्चैस्तथा विद्या सा नमः कृत्स्न इत्यपि ।। ७

सा नमः सहमानाय नमः ककुभाय चाप्यथ ।
नमो निषङ्गिणे विद्या नमो वञ्चत इत्यथ ।। ८

नमो निचेरवे विद्या नमः सृकाविभ्य इत्यथ ।
नमोऽसिमद्भ्य इत्यन्या नम उष्णीषिणे तथा ।। ९

भस्मच्छन्नो भवघ्नं प्रजपति यदिराट्रुद्रमन्त्रं सतारं
पारं तं भवासागस्य गिरिजे मत्प्रीतिभाक् प्राप्नुयात् ।
दिव्यं फालतले त्रिपुण्ड्रमगजे बिभ्रत्स रुद्राक्षभृत्
सन्त्यज्यान्यमृदोर्ध्वपुण्ड्रमखिलं विद्याविधिं प्राप्नुयात् ।। ६

यदि सितभसितत्रिपुण्ड्रधारी
विमलमनुं प्रजपेत(?) रुद्रसूक्तम्
शिवपदकमले निविष्टचेता
भवति भवादपि मुच्यते गृहस्थः ।। ७

वर्णी वनी शतमनुं शतरुद्रमन्त्रं
भस्माक्षधृग्यदि जपेत(?) विमुक्तिसिद्ध्यै ।
विध्युज्झितोऽपि नियताश्रमवर्णधर्मैः
रुद्रस्य जाप्यपरमः सकलं लभेत ।। ८

यो भानुसोदरवरोत्तममूलसंस्थो
रुद्रार्थवादविधि बोधित मन्त्रसारः ।
तस्याविमुक्तसदनं मरणान्तकाले
प्राप्यं सदेशि मदनान्तकदृष्टिदृष्टः ।। ९

श्रीबिल्वमूलगतिभाक् शतरुद्रमन्त्र-
जापेन पापसहितोऽपि विमुक्तपापः ।
स एव पङ्कजपादयुग्म-
निष्ठानकृच्छाम्भवसत्तमोऽद्रिजे ।। १०

प्रातः श्रीशतरुद्रमन्त्र जपतो भस्मत्रिपुण्ड्राक्षधृक्
सायाह्नेऽपि ततोऽपि सङ्गव कृतं सायन्तने जन्महम् ।
रात्रौ तत्प्रजपन्निशासु गिरिजे भस्माक्षधृक् मुक्तिभाक् ।।

## ।। द्वात्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

अथान्यं विधिमाख्यास्ये रुद्रमन्त्रस्य सत्तम ।
शृणुष्व सावधानेन चेतसा शिवभाषितम् ।। १

**ईश्वर उवाच -**

दिवैव जापो विधिवत्प्रकुर्या-
च्छ्रीरुद्रमन्त्रस्य सदैव शङ्करि ।
रात्रौ न जप्यो मनुरेष निश्चितं
शिवाभिषेके तु सदैव योज्यः ।। २

कालाष्टम्यां सोमवारे महेशि
भूतायां वै ग्रहणे पर्वकाले ।
श्रीरुद्रं सञ्जप्य शम्भोः प्रसादा
द्भुक्त्वा भोगान्मुक्तिमभ्येति चान्ते ।। ३

मद्रुद्रजाप्यं परिहाय मर्त्या
मुक्त्यै कथं ते प्रभवन्ति मूढाः ।
रत्नं स्वहस्तस्थमपास्य मोहा-
द्गृह्णाति काचं मणिमत्र लोकः ।। ४

रुद्रैकादशिनीं जपन्निह जनो भस्मत्रिपुण्ड्राङ्कितो
रुद्राक्षाभरणाः शिवैकशरणः पूतो महापातकैः ।
तेनैवोत्तमदिव्यलिङ्गमगजे संसिच्य नीरैर्वरैः
सर्वोर्वीवरदानकोटिजफलं लब्ध्वा स मुक्तो भवेत् ।। ५

अणिमादिगुणैश्वर्यं दिव्यान् भोगांश्च दुर्लभान् ।
आसाद्य शिवसायुज्यमाप्नोत्यन्ते न संशयः ।। ५८

यावद्विश्वम्भरा शैलद्वीपकाननसंयुता ।
अतिरुद्रे कृते तावत्कालं भूमण्डले द्विजाः ।। ५९

विद्यायुःश्रीसमायुक्ता सन्ततिर्वसति ध्रुवम् ।
अतिरुद्रसमो धर्मो न भूतो न भविष्यति ।। ६०

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
एतद्वः शतरुद्रीयमाहात्म्यं पापनाशनम् ।। ६१

उदीरितं मया प्रीत्या किम्पुनः श्रोतुमिच्छथ ।। ६२

यस्मिन् ग्रामे पुरेवा द्विजकुलतिलक्रो भस्मरुद्राक्षधृक्सन्
श्रीरुद्रप्रजपादरोऽभिनिवसेत् तत्क्षेत्रवर्यं मम ।
क्रोशं तत्र मृतेऽपि कीटकनरो ग्राम्योऽपि चान्योऽपि वा
भूयादेकश्रुतीरितोऽयमगजे कल्पेत मुक्तिश्रियै ।। ६३

किं जप्येनामृतत्वं भवति च जगति इत्युपक्रम्य वेदे
पृष्टो वर्णिगणैर्गणेन्द्रपददं प्राहारुणिर्मे परम् ।
पुण्यं मे शतरुद्रजापनविधिः प्रोद्धूलिताङ्गो मुदा
रुद्राक्षाभरणे त्रिपुण्ड्रललिते फालप्रभामण्डले ।। ६४

।। इति श्रीशिवरहस्ये दशमांशे
एकत्रिंशोऽध्यायः ।।



अष्ट पञ्चाशदधिकशतमन्त्रैः फलप्रदैः ।
हुत्वा पश्चाद्वसोर्धारामेकोनाहुतिमाचरेत् ।। ४८

एवमेकादशावृत्त्या रुद्रैकादशिनी स्मृता ।
श्रद्धया नमकान्तस्थैर्मन्त्रैर्हुत्वाज्यमादरात् । ४९

वसोर्धारां जपन्नन्ते कुर्वन्नेवाहुतिं बुधः ।
रुद्रैकादशिनीहोमं रुद्रावृत्त्या समाचरेत् ।। ५०

महारुद्राङ्गहोमोऽयं सर्वाघौघविनाशनः ।
अतिरुद्रैस्तथा कुर्युः शतमेकादशोत्तरम् ।। ५१

नमकेनानुवाकेन होमं कृत्वा विचक्षणः ।
चमकेनानुवाकेन होमं कुर्युस्ततो द्विजाः ।। ५२

पुनः समग्रनमकं जप्त्वान्तो वह्निवल्लभाम् ।
एकामेकाहुतिं कुर्यात्समग्रनमकं ततः ।। ५३

जप्त्वाऽन्ते वह्निदयितामुच्चार्यैकाहुतिं चरेत् ।
इति वारत्रयं कुर्यात्पूर्णाहुतिमतः परम् ।। ५४

अतिरुद्राङ्ग होमोऽयं सर्वप्रत्यूहनाशनः ।
एतच्च द्विगुणं प्रोक्तं महारुद्रजपो(पा)हवम् ।। ५५

एतद्दशगुणं कुर्वञ्जपहोमद्विजार्चनम् ।
कोटिरुद्रमिति प्रोक्तं शिवप्रीतिकरं मुने ।। ५६

अश्वमेधसहस्रस्य फलं प्राप्नोति साधकः ।
पुत्रपौत्रानवाप्नोति विद्यायुःश्रीसमन्वितान् ।। ५७

नमो लोप्याय चेत्यन्यो नम उलप्य इत्यथ ।
नमो ऊर्व्याय चाप्यन्यो नम पर्ण्याय चाप्यथ ।। ३८

नमोऽपगुरमाणेति तथाभिघ्नत इत्यथ ।
नम आक्खितदते नमो वः किरिको मनुः ।। ३९

नमो देवादिहृदयं नमो विक्षीणकं परम् ।
नमो विचिन्वत्केभ्यश्च नम आनिर्हते परम् ।। ४०

नम आमीवन्मनुश्च प्रोच्चरेत्सिद्धविद्यकः ।
द्रापे अन्धस इत्यन्यो याते रुद्र शिवेत्यथ ।। ४१

इमा रुद्राय विद्यान्या मृडानो रुद्रमन्त्रकः ।
मानो महान्तमित्यन्यो मानस्तोके मनुस्तथा ।। ४२

आरात्ते गाघ्न इत्यन्योह्यस्मिन् इत्यपरो मनुः ।
नीलग्रीवा इति ह्यन्यो नीलग्रीवा इतीरिताः ।। ४३

ये वृक्षेषु मन्त्रोऽन्यो ये भूतानामथापरः ।
ये अन्नेषु इत्यन्यो ये पथां पथि मन्त्रकः ।। ४४

येतीर्थानि मन्त्रोऽन्यो य एतान्तश्च इत्यपि ।
नमोरुद्रेभ्य इत्यन्य तं वे जम्भेति च त्रिभिः ।। ४५

एवं शतं ते मन्त्राः स्युः शतरुद्राः समीरिताः ।
अष्टपञ्चाशदधिकाः शतं मन्त्राः प्रकीर्तिताः ।। ४६

येतेऽमृताख्या मन्त्राःस्युरमृतत्वप्रदायकाः ।
श्रीरुद्रायेदं न ममेत्युच्चार्यं ब्राह्मणोत्तमैः ।। ४७

नमो मेध्याय इत्यन्यो विद्युत्यायेत्यथापरः ।
नम ईध्रिय इत्यन्यो ह्यातप्य इतरो मनुः ।। २८

नमो वात्याय चेत्यन्यो नमो वास्त्वित्यथापरः ।
नमः सोमाय मन्त्रोऽन्यो नमस्ताम्राय चेत्यथ ।। २९

नमः शङ्गाय मन्त्रोऽन्यो नम उग्राय चेत्यथ ।
नमो अग्रेवधायेति नमो हन्त्रेत्यथापरः ।। ३०

नमो वृक्षेभ्य इत्यन्यो नमस्ताराय इत्यथ ।
अथचेतः परं मन्त्रो नमः शम्भव इत्यपि ।। ३१

मयोभवेत्यथान्योयं शङ्करोऽन्यो मयस्करः ।
नमः शिवाय मन्त्रोऽन्यः सर्वमन्त्रशिरोमणिः ।। ३२

तथा शिवतरश्चान्यो मन्त्रोऽयं शिवबोधकृत् ।
नमस्तीर्थ्याय चाप्यन्यो नमः पार्याय चेत्यथ ।। ३३

नमः प्रतरणायेति नमश्चोत्तरणाय च ।
नम आतार्याय मन्त्रो नमः शष्प्याय चेत्यथ ।। ३४

नमः सिकत्याय चान्यो नम इरिण्याय चेत्यथ ।
नमः किंँशिलायेति नमः कपर्दिन इत्यथ ।। ३५

नमो गोष्ठ्याय चाप्यन्यो नमस्तल्प्याय इत्यथ ।
नमः काट्याय चाप्यन्यो नमो ह्रदय्य इत्यथ ।। ३६

नमः पाँसव्यमन्त्रो नमोरजस्य इत्यथ ।
नमः शुष्क्याय च तथा हरित्यायापरो मनुः ।। ३७

नमः शीघ्रियाय मन्त्रो नम ऊर्म्याय इत्यथ ।
नमः स्त्रोतस्यायेति नमो ज्येष्ठाय चेत्यथ ।। १८
नमः कनिष्ठ इति च पूर्वजो(जः) परजो मनुः ।
(नमो मध्यमाय चापगन्भ)
नमो मध्यमाय चापगल्भ इत्यथ ।। १९

नमो जघन्याय इति नमः सोभ्याय चेत्यथ ।
नमो याम्याय चेत्यन्यो नम उर्वर्याय इत्यथ ।। २०

नमः श्लोक्याय चेत्यन्यो नमोवन्याय चेत्यथ ।
नमः श्रवाय चेत्यन्यो नमः प्रतिश्रवोऽपरः ।। २१

नम आशुषेणाय च परो मन्त्रो द्विजोत्तमाः ।
नमः शूराय चेत्यन्यो नमो वर्मिण इत्यथ ।। २२

नमो बिल्मिन इत्यन्यो नमः श्रुताय चेत्यथ ।
नमो दुन्दुभ्य इत्यन्यो नम आहनन्य इत्यपि ।। २३

नमो धृष्णव इत्यन्यः प्रमृशेत्यन्य ईरितः ।
नमो दूताय चे त्यन्यो ह्यन्योऽत्रैव निषङ्गिणे ।। २४

नमस्तीक्ष्णेषवेह्यन्यो नमः स्वायुधोऽपरः ।
नमः स्त्रुत्याय चेत्यन्यो नमः काट्याय चेत्यथ ।। २५

नमः सूद्याय चाप्येवं सरस्यायेति चाप्यथ ।
नमो नाद्याय चेत्यन्यो वैशन्तायेत्यथापरः ।। २६

नमः कूप्याय चाप्यन्यो नम आवट्य इत्यपि ।
नमो वर्ष्याय इत्यन्यो ह्यवर्ष्यायेत्यथापरः ।। २७

नम इषुमद्भ्य इत्यन्या नम आतन्वानेभ्य एव च ।
नम आयच्छदित्यन्या नमोऽस्यद्भ्यः परो मनुः ।। १०

नम आसीन इत्यन्या नमः स्वपद्भ्य इत्यपि ।
नमस्तिष्ठद्भ्य इत्यन्या नमः सभाभ्य इत्यथ ।। ११

नम अश्वेभ्य इत्यन्या नम आव्याधिनीत्यपि ।
नम उगणाभ्य इत्यन्या नमो गृत्सेभ्य इत्यथ ।। १२

नमो व्रातेभ्य इत्यन्या नमो गणेभ्य इत्यथ ।
*नमस्तक्षभ्य इत्यन्या नमः कुलालेभ्य इत्यथ ।। १३

नमः पुञ्जिष्ट इत्यन्या नम इषुकृद्भ्य इत्यथ ।
नमो मृगयुमन्त्रोऽन्यो नमः श्वभ्यः परो मनुः ।। १४

नमो भवायेत्यपरो नमः शर्वाय इत्यथ ।
नमो नीलेति मन्त्रोऽन्यो नमः कपर्दिनेत्यथ ।। १५

नमःसहस्त्राक्षायेति नमो गिरिश इत्यथ ।
नमो मीढुष्टमायेति नमो ह्रस्वाय चेत्यथ ।। १६

नमो बृहत इत्यन्यो नमो वृद्धाय चेत्यथ ।
नमो अग्रियायचेति नम आशव इत्यथ ।। १७

---

* अत्र मन्त्रगणनं लेखकदोषेण विच्छिन्नमित्यतः साङ्गत्याय एवं लिख्यते -

नमो विरूपेभ्य इत्यन्या नमो महद्भ्य इत्यपि ।
नमो रथिभ्य इत्यन्या नमो रथेभ्य इत्यथ ।
नमः सेनाभ्य इत्यन्या नमः क्षत्तृभ्य इत्यथ ।। इति ।

आपातालनभःस्थलान्तभुवन ब्रह्माण्डमाविस्फुर-
ज्योतिस्फाटिकलिङ्गमौलिविलसत्पूर्णेन्दुवान्तामृतैः ।
अस्तोकाप्लुतमेकमीशमनिशं रुद्रानुवाकान् जपन्
ध्यायेदीप्सितसिद्धये द्रुतपदं विप्रोऽभिषिञ्चेच्छिवम् ।। १२

**स्कन्द उवाच-**

एवमाह महादेवः कैलासे गिरिजां प्रति ।
रुद्राध्याय विधिं कृत्स्नं किं भूयः श्रोतुमिच्छामि ।। १३

शम्भोः पदाम्भोजसमर्चने रताः
कुम्भोद्भवाद्या मुनयश्च शाम्भवाः ।
अम्भोजजाद्याश्च हि पञ्चरुद्रं
जपन्ति दम्भादिविवर्जिताशयाः ।। १४

ताराद्यन्तपदं जपेद्यदि मुदा रुद्रं द्रुतोच्चं विना
नत्वा प्राञ्जलिरीशनाम कलयन् मुक्तोमहापातकैः ।
भस्मोद्धूलितदेह एव हि जपन् श्रीरुद्रमन्त्रं द्विजो
रुद्राक्षामलदेह एव हि भवेन्मुक्तो महापातकैः ।। १५

।। इति श्रीशिवरहस्ये दशमांशे रुद्रमहिमानाम
द्वात्रिंशोऽध्यायः ।।



## ।। त्रयस्त्रिंशोऽध्यायः ।।

**जैगीषव्य उवाच -**

श्रुतं ते रुद्रमाहात्म्यं देवदेवसनातनम्
पञ्चाक्षरस्य च विधिं मुदा त्वं मे वदाधुना ।। १

विधिर्जपेऽधिकारश्च कीदृशस्येति मे वद ।
सुब्रह्मण्य नमस्तेऽस्तु त्वत्तो वेत्ता न चापरः ।। २

**सूत उवाच -**

इति तद्वचनं श्रुत्वा मुनेः प्राह शिखिध्वजः ।
महादेवेन यत्प्रोक्तं कैलासे पार्वतीं प्रति ।। ३

**स्कन्द उवाच -**

जैगीषव्य शृणुष्वेममितिहासं नगोत्तमे ।
कैलासे लास्यसदने मदनान्तकरस्य च ।। ४

नानाशिवालयोल्लासिमणिद्युतिविराजिते ।
शातकुम्भमहाकुम्भधगद्धगितदिक्तटे ।। ५

महाबिल्वोरुविपिनसन्तानप्रवरे मुने ।
रत्नप्राकारसौधोद्यच्चन्द्रमौलीश्वरालये ।। ६

पञ्चयोजनसाहस्रचन्द्रस्फटिकनिर्मिते ।
तत्र तत्स्फाटिकोद्दामसौधे चन्द्रशिखामणिः ।। ७

एकाकाराखण्डदण्डस्फाटिकोत्तममण्टपे ।
सहस्रस्तम्भवितते रत्नसिह्मासने स्थितः ।। ८

देव्या सह महादेवो रहस्ये सुन्दरास्यकः ।
तन्मौलिचन्द्रकिरणनिर्यत्स्फाटिकसंस्रवैः ।। ९

अच्छोदैः सर उत्कृष्टमुत्फुल्लकमलोत्पलम् ।
स्फाटिकोत्तमसोपानं तत्तीरमणिमण्टपम् ।। १०

पश्चिमाभिमुखं तत्र गर्भागारं महेशितुः ।
शतयोजनमानेन स्फटिकोपलनिर्मितम् ।। ११

प्राकारराजद्वृषभं मणिकुम्भविराजितम् ।
चन्द्रमौलीश्वरं लिङ्गं स्फाटिकं योजनोन्नतम् ।। १२

तन्मौलिचन्द्रकान्तोरुधारासाराङ्गशीतलम् ।
भुजङ्गबिल्वकुसुमैरर्चितं लिङ्गमुत्तमम् ।। १३

सोमार्द्रापातयुक्तायां भूतायां भूतनायकम् ।
स्नात्वा तच्चन्द्रसरसि भस्मरुद्राक्षभूषणाः ।। १४

गणास्तत्र समायान्ति अहं चापि गजाननः ।
वीरभद्रस्तथा नन्दी विघ्नस्तण्डुः ऋटिर्मुने ।। १५

चन्द्रमौलीश्वरं लिङ्गं द्रष्टुं सम्पूजितं सदा ।
तस्यां तिथावेकदाहं गजास्यगणपैर्वृतः ।। १७

द्रष्टुं श्रीन्द्रमौलीशं वरिवस्याकरोऽगमम् ।
तद्द्वारि वारितोऽतिष्ठं नन्दिकेशेन सादरम् ।। १७

अहमेवाब्रवं तत्र नन्दिकेशं गणैर्वृतः ।

**स्कन्द उवाच -**

सोमार्द्रापातयुक्तायां भूतायामहमादरात् ।। १३

अस्यां सम्पूजयामीशं चन्द्रमौलीश्वरं शिवम् ।
तदा तद्वचनं श्रुत्वा नन्दिकेशोऽभ्यभाषत ।। १९

प्रणम्य मां द्वारपालः शम्भोरत्नगृहोचितः ।

**नन्दिकेशः उवाच -**

रहस्यर्चितुमीशाय विज्ञाप्याद्याहमाव्रजे ।। २०

इत्युक्त्वा नन्दिकेशोऽथ गत्वा नत्वा महेश्वरम् ।
स्तुत्वा प्राञ्जलिराहेत्थं मदागमनमीश्वरे ।। २१

**नन्दिकेशः-**

देवदेव महादेव सर्वज्ञशशिशेखर ।
द्रष्टुं श्रीचन्द्रमौलीशं नन्तुं सम्पूजितुं गणाः ।। २२

स्तोतुं स्कन्दादयो द्वारि गजास्याद्याश्च संस्थिताः ।
सोमार्द्रापातयुक्तायां भूतायां गणनायकाः ।। २३

तव पादाम्बुजद्वन्द्वं द्रष्टुमिच्छन्ति शङ्कर ।
आज्ञापय महादेव द्रष्टुं लिङ्गं तव प्रभो ।। २४

इति तद्गिरमाकर्ण्य महादेवो महेश्वरः ।
उवाच तं महादेवो नन्दिकेशः पुरः स्थितम् ।। २५

**ईश्वर उवाच -**

प्रविशन्तु गणश्रेष्ठाः स्कन्दविघ्नेश्वरादयः ।
पूजयन्तु सपर्याभिर्लिङ्गं मे गणपोत्तम ।। २६

चन्द्रमौलीश्वरं ह्येते दुरादर्शं गणोत्तमाः ।
पश्यन्तु च गणाः सर्वे पूजयन्तु सपर्यया ।। २७

इत्युक्तो नन्दिकेशोऽथ तदास्मानप्रवेशयत्[1] (?)
गत्वा गणा वयं सर्वे तत्र नत्वा महेश्वरम् ।। २८

देवीं च नत्वा गत्वाथ तदान्तर्गृहमध्यगाम् ।
गजास्यश्चाप्यहं विप्र भस्मरुद्राक्षभूषणाः ।। २९

गत्वा श्रीचन्द्रमौलीशं पूजयन्तो व्यवस्थिताः ।
गव्यैर्नवेक्षुसारैश्च चन्द्रसारैश्च चन्दनैः ।। ३०

बिल्वचम्पकमन्दारनवनीलोत्पलाम्बुजैः ।
धूपैर्दीपैश्च नैवेद्यैः स्तवैश्च करताडनैः ।। ३१

नीराजनैरथान्यैश्च चामरच्छत्रदापनैः ।
प्रदक्षिणनमस्कारैः शतरुद्रीयसंस्तवैः ।। ३२

वीणावेणुमृदङ्गानां सरावैर्नृत्तदर्शनैः ।
विविधैर्मुरजाढक्काशङ्खदुन्दभिवादनैः ।। ३३

एवं चतुर्षु यामेषु भूतायामर्च्य शङ्करम् ।
गणपा नन्दिभृङ्ग्याद्या वयं तत्र महेश्वरम् ।। ३४

यामिनीरमणोत्तसं कामिनीशोभिताङ्गकम् ।
क्षणदां मेनिरे सर्वे क्षणप्रायां गणाधिपाः ।। ३५

चन्द्रमौलीश्वरे लिङ्गे गणैः पूजां कृतां हरः ।
पश्यन् सिह्मासनवरे देव्यातिष्ठत् स हर्षितः ।। ३६

---

1. प्रावेशयत् इत्यर्थे असङ्गतोऽयं प्रयोगः । एवं बहुत्र व्याकरण-नियमानुल्लङ्घ्यैव प्रयोगाः दृश्यन्ते । तच्छोधनं च दुःशकम् ।

वयं स्तवाम देवेशं चन्द्रमौलीश्वरं तदा ।
तत्स्तुतिं शृणु वक्ष्यामि समाहितमना मुने ।। ३७

**गणा (तुष्टुवुः)-**

यस्मिन् जगत्सर्वमिदं विभाति
यश्चाप्यनन्यः सकलप्रपञ्चात् ।
तिलेषु तैलोपममास्थितं त्वां
श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ३८

पश्यन्ति यन्न श्रुतयः शिरस्थं
शिरःस्थितं वस्त्विव सर्वलोकाः ।
त्वामात्मभूतं जगतां त्रयाणां
श्रीचन्द्र . . . . . . . . . . ।। ३९

अणोरणीयान् महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तं सर्वभूतस्थितमात्मरूपं
श्रीचन्द्र . . . . . . . . . . . ।। ४०

यः सर्वसाक्षी तमसः परस्ता-
द्विभाति सर्वं किल यस्य भासा ।
त्वामागमान्तैरपि दुर्निरूपं
श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ४१

पुमानविज्ञाय शिवं कदाचि-(पि)
(दु) द्दुःखस्य नान्तं समुपैति धीरः ।

त्वां सच्चिदानन्दमयं प्रशान्तं-
    श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ४२

अजं पुराणं पुरुषं महान्तं
    अनश्वरं वाङ्मनसो(सा)ऽति दूरम् ।
ज्ञानात्मनां हृद्यवभासमानं
    श्रीचन्द्र . . . . . . . . . . . . ।। ४३

वदन्त्यमी यत्पदमेव वेदा
    ज्ञाते तु यस्मिन् सकलं विबुद्धम् ।
त्वां प्रत्यगात्मनमचिन्त्यशक्तिं
    श्रीचन्द्र . . . . . . . . . . . . ।। ४४

यं निर्विकल्पेन समाधिनैव
    तपस्विनश्चेतसि वीतरागाः ।
ध्यायन्ति तेजोमयमद्भुतं त्वां
    श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ४५

त्रिलोचनं चन्द्रकलावतंसं
    गङ्गातरङ्गोल्लसदुत्तमाङ्गम् ।
स्मेरास्यमिष्टप्रदमष्टमूर्तिं
    श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ४६

अपारसच्चित्सुखराशिमेक-
    मनादिमध्यान्तमनन्तरूपम् ।
त्रिलोचनं नीलगलं प्रशान्तं
    श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ४७

कैलासशैलेन्द्रशिरस्तटेषु
नगेन्द्रपुत्र्या सह संवसन्तम्
विभूतिरुद्राक्षविभूषिताङ्गं
श्रीचन्द्रमौलीश्वरमाश्रयामः ।। ४८

**स्कन्द उवाच -**

इत्थं गणानन्दवचस्तरङ्ग-
माध्वीझरीभारतरोरुहर्षः ।
हरस्तदा तां गिरिराजुत्रीं
धन्यामपश्यद्गिरिशो महेशः ।। ४९

तदन्तरे सा प्रणता महेश-
पादाम्बुजं स्वाञ्जलिपद्मकोशैः ।
अभ्यर्च्य हर्षाश्रुसमाप्लुताक्षी
महेश्वरं सानुनया बभाण ।। ५०

।। इति श्रीशिवरहस्ये दशमांशे चन्द्रमौलीश्वरस्तुतौ
त्रयस्त्रिंशोऽध्यायः ।।



## ।। चतुर्विंशोऽध्यायः ।।

**देव्युवाच -**

देवदेव महादेव करुणावरुणालय ।
शरणं त्वां प्रपन्नाहं कारणं शरणं सताम् ।। १

तथाविधानं मे ब्रूहि त्वं गोप्यमपि मे प्रभो ।
यदि ते करुणा चित्ते मयि शम्भो रुणद्धि चेत् ।। २

विस्तरात्तस्य मन्त्रस्य प्रभावं कथयाधुना ।
नातिसङ्ग्रहविस्तारनिस्ताराय कृपाकर ।। ४

**स्कन्द उवाच -**

इत्थं गिरिजया पृष्टस्तुष्टस्तां प्राह शङ्करः ।
अम्भोरुहाक्षीमम्बां तामभिवीक्ष्य हसन् हरः ।। ५

**ईश्वर उवाच -**

पञ्चाक्षरस्य माहात्म्यं कल्पकोटिशतैरपि ।
न शक्यं विस्तराद्वक्तुं तस्मात्सङ्क्षेपतः शृणु ।। ६

वेदे शिवागमे चायं उभयत्र षडक्षरः ।
मन्त्रस्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः ।। ७

सर्वमन्त्राधिकश्चायंमोङ्काराद्यः षडक्षरः ।
सर्वेषां शिवभक्तानामशेषार्थप्रसाधकः ।। ८

तदल्पाक्षरमर्थाढ्यं वेदसारं विमुक्तिदम् ।
आज्ञासिद्धमसन्दिग्धं वाक्यमेतच्छिवात्मकम् ।। ९

नानासिद्धियुतं दिव्यं लोकचित्तानुञ्जनम् ।
सुनिश्चितार्थगम्भीरं वाक्यं तत्पारमेश्वरम् ।। १०

मन्त्रं सुखमुखोच्चार्यमशेषार्थप्रसिद्धये ।
प्राहोन्नमः शिवायेति सर्वज्ञः सर्वदेहिनाम् ।। ११

तद्बीजं सर्वविद्यानां मन्त्रमाद्यं षडक्षरम् ।
अतिसूक्ष्ममहार्थं च ज्ञेयं तद्वटबीजवत् ।। १२

देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत् प्रभुः ।
ओमित्येकाक्षरे मन्त्रे स्थितः सर्वगतः शिवः ।। १३

ईशानाद्यानि सूक्ष्माणि ब्रह्माण्येकाक्षरेण च ।
मन्त्रे ओं नमः शिवायेति सुस्थितो नियतः क्रमः ।। १४

मन्त्रे षडक्षरे सूक्ष्मः पञ्चब्रह्मतनुः शिवः ।
वाच्यवाचकभावेन स्थितः साक्षात्स्वभावतः ।। १५

वाच्यः शिवः प्रमेयः स्यात् मन्त्रस्तद्वाचकः स्मृतः ।
वाच्यवाचकभावोऽयमनादिः सुस्थितस्तयोः ।। १६

यथानादिप्रवृत्तोऽयं घोरः संसारसागरः ।
शिवोऽपि हि तथाऽनादिः संसारान्मोचकः स्थितः ।। १७

व्याधीनां भेषजं यद्वत् प्रतिपक्षस्वभावतः ।
तद्वत्संसारदोषाणां प्रतिपक्षः स्थितः शिवः ।। १८

असत्यस्मिन् जगन्नाथे तमोभूतमिदं भवेत् ।
आदित्येन यथा हीनं निरालोकमिदं जगत् ।। १९

अभावे हीश्वरस्येयं जगत्सृष्टिः कथं भवेत् ।
अचेतनत्वात्प्रकृतेरज्ञत्वादीश्वरस्य च ।। २०

प्रधानपरमाण्वादि यावत्किञ्चिदचेतनम् ।
मत्कर्तृत्वं स्वयं दृष्टं बुद्धिमत्करणं विना ।। २१

धर्माधर्मोपदेशश्च बन्धमोक्षविचारणा ।
न सार्वज्ञ्यं विना पुंसां आदिसर्गे प्रसिध्यति ।। २२

वैद्यं विना निरानन्दाः क्लिश्यन्ते रोगिणो यथा ।
शिवं विना निरानन्दं क्लिश्यते हि जगत्तथा ।। २३

तस्मादनादिः सर्वज्ञः परिपूर्णः सदाशिवः ।
अस्ति नाथः परित्राता पुंसां संसारसागरात् ।। २४

आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः ।
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे ।। २५

तस्याभिधानमन्त्रोऽयमभिधेयः ततः स्मृतः ।
अभिधानाभिधेयत्वान्मन्त्रार्थः परमः शिवः ।। २६

एतावद्धि शिवज्ञानं एतावद्धि परं पदम् ।
तदोन्नमः शिवायेति शिववाक्यं षडक्षरम् ।। २७

विधिवाक्यमिदं शैवं नार्थवादः शिवात्मकम् ।
यः सर्वज्ञः सुसम्पूर्णः स्वभावविमलः शिवः ।। २८

लोकानुग्रहकर्ता यः स मृषार्थः कथं भवेत् ।
यद्यथाऽवस्थितं वस्तु गुणदोषैःस्वभावतः ।। २९

यावत्फलं च यत्पुण्यं सर्वज्ञत्वं तथा भवेत् ।
राजा गानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत् ।। ३०

ते चेश्वरे न विद्यन्ते ब्रूयात्स कथमन्यथा ।
अजाताशेषदोषेण सर्वज्ञेन शिवेन यत् ।। ३१

प्रणीतममलं वाक्यं तत्प्रमाणं न संशयः ।
तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता ।। ३२

यथार्थं पुण्यपापेषु तदश्रद्धो व्रजत्यधः ।
स(स्व)र्गापवर्गसिद्ध्यर्थं भाषितं यत्सुशोभनम् ।। ३३

वाक्यं मुनिवरैः शान्तैस्तद्विज्ञेयं सुभाषितम् ।
रागद्वेषात्मकक्रोधकामतृष्णानुसारि यत् ।। ३४

वाक्यं निरयहेतुत्वात् तद्दुर्भाषितमुच्यते ।
संस्कृतेनापि किं तेन मृदुना ललितेन वा ।। ३५

अविद्यारागवाक्येन संसारक्लेशहेतुना ।
यच्छ्रुत्वा जायते श्रद्धा रागादीनां च सङ्क्षयः ।। ३६

विरूपमपि तद्वाक्यं विज्ञेयमतिशोभनम् ।
बहुत्वेनापि मन्त्राणां सर्वज्ञेन शिवेन यत् ।। ३७

प्रणीतममलं मन्त्रं न तेन सदृशं क्वचित् ।
सप्तकोटिमहामन्त्रैरुपमन्त्रैरनेकधा ।। ३८

मन्त्रः षडक्षरो भिन्नः सूत्रवृत्यात्मना यथा ।
शिवज्ञानानि यावन्ति विद्यास्थानानि यानि च ।। ३९

षडक्षरस्य सूत्रस्य तानि भाष्यं समासतः ।
किं तस्य बहुभिर्मन्त्रैःशास्त्रैर्वा बहुविस्तरैः ।। ४०

यस्यों नमःशिवायेति मन्त्रोऽयं हृदि सुस्थिरः ।
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।। ४१

येनोंन्नमः शिवायेति मन्त्राभ्यासःस्थिरीकृतः ।
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् ।। ४२

जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ।
अन्त्यजो वाऽधमो वापि मूर्खो वा पण्डितोऽपि वा ।। ४३

पञ्चाक्षरजपे निष्ठो मुच्यते पापबन्धनात् ।
इत्युक्तं परमेशेन देव्या पृष्टेन शूलिना ।। १४

हिताय सर्वमर्त्यानां *तिष्यजानां विशेषतः ।

**गौरी उवाच -**

कलौ कलुषिते काले दुर्जये दुरतिक्रमे ।। ४५

अपुण्यतमसा छन्ने लोके धर्मपराङ्मुखे ।
क्षणे वर्णाश्रमाचारे सङ्करे(साङ्कर्ये) समुपस्थिते ।। ४६

सर्वाधिकारे सन्दिग्धे निश्चिते वा विपर्यये ।
पथ्योपदेशे विरले गुरुशिष्यक्रमे गते ।। ४७

केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर ।

**शिव उवाच -**

आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम ।। ४८

---

* कलियुगे लब्धजन्मनाम् ।

भक्त्या च भावितात्मानो मुच्यन्ते कलिजा नराः ।
मनोवाक्लायजैर्दोषैर्वक्तुं स्मर्तुमगोचरैः ।। ४९

दूषितानां कृतघ्नानां निर्दयानां खलात्मनाम् ।
लुब्धानां वक्रमनसामपि मत्प्रवणात्मनाम् ।। ५०

मम पञ्चाक्षरी विद्या संसारभयतारिणी ।
मयैवमसकृद्देवि प्रतिज्ञातं धरातले ।। ५१

पतितोऽपि विमुच्येत मद्भक्तो विद्ययानया
*विद्यां हृद्यामविद्यां विजहति मुदितां गद्यपद्याक्षरां तां
उत्सिद्यैतामविद्या हृदि कुटिलतमोरोगविद्यां जपेद्यः ।
मुक्तिः प्राप्त्यैव सद्य शतगुणफलदां पर्णशद्यप्रसादा-
दुद्भिद्यंत्वघमाद्यजन्ममरणं सद्यैव भेद्यं भवेत् ।। (?)

।। इति श्रीशिवरहस्ये दशमांशे
चतुस्त्रिंशोऽध्यायः ।।



* पद्यमिदं विविधदोषवत् ।

## ।। पञ्चत्रिंशोऽध्यायः ।।

**गौरी उवाच -**

पुनः पञ्चाक्षरस्यास्य महिमानं महेश्वर ।
अधिकारिविभेदेन पुरश्चर्तुः फलं वद ।। १

**ईश्वर उवाच -**

षडक्षरं प्रवक्ष्यामि समासेन गिरीन्द्रजे .
सद्यः संसारदुःखानि विनष्टानि जपाच्छिवे ।। २

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
देवतास्य शिवः साक्षादहमेव महेश्वरः ।। ३

शक्तिर्महेश्वरी त्वं च भुवनेशाक्षरी भवेः ।
बीजं मायात्मकं प्रोक्तं रुद्रः सङ्कल्पविग्रहः ।। ४

सोऽहं तन्मय एव स्यां मन्त्रमध्यस्थितः सदा ।
अङ्गुष्ठादिकनिष्ठान्तं विन्यसेदक्षरं क्रमात् ।। ५

मस्तके च ललाटे च हृदि नाभौ पदद्वये ।
पुनः पञ्चाक्षरेणैव न्यसेत्स्वस्य तनुं पराम् ।। ६

प्रणवं प्रथमं विद्यान् द्वितीयं तु नकारकम् ।
मकारं तत्परं देवि शिकारं तु ततःपरम् ।। ७

वकारं पञ्चमं विद्याद्यकारं षष्ठमुच्यते ।
एवं पञ्चाक्षरं देवि श्रीरुद्रपदमध्यगम् ।। ८

स्त्रीशूद्राणां नमोऽन्तोऽयं प्रभवेत मनुः शिवे ।
ब्रह्मक्षत्रविशामेव जप्योऽनुक्रमतो मनुः ।। ९

ब्रह्मचारि गृहस्थानां वर्णिनां वनवासिनाम् ।
सन्न्यासिनां सप्रणवमाद्यन्तेषु विधीयते ।। १०

न केवलं गृहस्थानां त्वद्बीजेन युतो मनुः ।
धनधान्यसमृद्धिश्च पुत्रपौत्रादिसम्पदः ।। ११

त्वद्बीजेन युतो द्यात् गृहिणां जापिनां मनोः ।
वर्णी जपेत्सहस्रं हि गृहस्थस्त्रिसहस्रकम् ।। १२

वनवासी सहस्राणां दशकं प्रजपेद्धि मे ।
सन्न्यासी पञ्चसाहस्रं प्रणवाद्यं जपेन्मनुम् ।। १३

न गायत्र्यधिकं जाप्यमेतत्पञ्चाक्षरं मनुम् ।
स्त्रीभिः शूद्रैश्च नियतं शतमष्टोत्तरं जपेत् ।। १४

यथा ब्राह्मणजप्यं स्यात् तथा विट्क्षत्रयोरपि ।
मन्त्रेणानेन मल्लिङ्गे कलशेन च सेचयेत् ।। १५

स एव पूजको मान्यो मम देवि प्रसादभाक् ।
अनुद्धूलितदेहेन न जप्योऽयं मनुः शिवे ।। १६

त्रिपुण्ड्रोज्झितफालेन न जप्योऽयं मनुःशिवे ।
अरुद्राक्षधरेणापि न जप्योऽयं मनुः शिवे ।। १७

ऊर्ध्वपुण्ड्रधरेणापि न जाप्योऽयं मनुः शिवे ।
नदीतीरे गृहे गोष्ठे वने चापि शिवालये ।। १८

बिल्वमूले विशेषेण पुरश्चर्या सुसिद्धिदा ।
मृगव्याघ्राजिने चीरे जप्योऽशीतकुशोत्तरे ।। १९

न भूमौ न च पाषाणे न काष्ठे जाप्यमाचरेत् ।
मन्त्रः साङ्गः समाख्यातो जपासनविधि क्रमैः ।। २०

देशकालविशेषोऽत्र कथ्यते गिरिजेऽधुना ।
अष्टम्यां च चतुर्दश्यां पर्वणोरुभयोरपि ।। २१

ग्रहणे सोमसूर्योत्थविषुवायनयोरपि ।
सोमवारे प्रदोषे च सायं प्रातः पराह्णयोः ।। २२

नित्यादप्यधिकं कुर्याज्जपं पञ्चाक्षरस्य च ।
फलं शतगुणं तत्र प्रोक्तमीशे मया धुना ।। २३

मनोरथो तथा मेऽद्य नमो युक्तो विशेषतः ।
अहं वाच्यो महादेवस्तन्मन्त्रस्य सनातनः ।। २४

ध्यानाङ्गन्यास भेदाश्च बहवोऽस्य मनोःशिवे ।
निगमागमभेदेन वदन्ति मुनयोऽद्रिजे ।। २५

मन्त्रार्थः कथितः कृत्स्नः (?)पुरश्चर्यां शृणुष्व मे ।
आचार्यमुखतो मन्त्रं जपेत्सार्थं समाहितः (?) ।। २६
(आचार्यमुखतो मन्त्रं गृहीत्वा सुसमाहितः )

यथाशक्ति धनं तस्मै प्रदत्वा(?) तदनुज्ञया ।
स्नानं त्रिषवणं कृत्वा भस्मना(?) शाकभोजनः ।। २७

फलमूलाशनो वापि हविष्याशी यथाबलम् ।
पर्वताग्रे नदीतीरे सागरान्ते शिवलये ।। २८

वने वा निर्भये शुद्धे प्राङ्मुखोदङ्मुखः शुचिः ।
बिल्वमूले गृहे गोष्ठे भस्मच्छन्नासनो भवेत् ।। २९

प्राणायामत्रयं कृत्वा छन्दर्षिज्ञोऽस्य दैववित् ।
शक्तिं बीजं देवतां च ध्यात्वा मन्त्राङ्गकैः क्रमात् ।। ३०

करन्यासं पुनः कृत्वा तथाङ्गन्यासमेव च ।
पञ्चाङ्गमपि विन्यस्य गुरुं मामभिवीक्ष्य च ।। ३१

लिङ्गे वा सुस्थले देशे सोमसूर्याग्निमण्डले ।
विद्युल्लेखेव कल्याणं ज्वलन्तं विश्वरूपिणम् ।। ३२

शिवं ध्यात्वा जपेन्मन्त्रं लक्षाणां पञ्चकं शिवे ।। ३३

वन्दे हरं वरदशूलकपालहस्तं
साभीतिमद्रिसुतयोज्ज्वलदेहकान्तिम् ।
वामोरुपीठगतया निजवामहस्त-
न्यस्तारुणोत्पलयुजा परिणद्धदेहम् ।। ३४

शान्तं पद्मासनस्थं शशधरमकुटं पञ्चवक्त्रं त्रिणेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।
नागं पाशं च घण्टां प्रलयहुतवहं चाङ्कुशं वामभागे
नानालङ्कारदीप्तस्फटिकमणिनिभं पार्वतीशं नमामि ।।

मङ्गलायतनं देवं युवानमतिसुन्दरम् ।
ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया ।। ३६

---

* अत्रं 'मूले कल्पद्रुमस्येति' ध्यानप्रकारोऽपि अनुष्ठाने वर्तते ।

एवं ध्यात्वा जपेन्मन्त्रं पञ्चाक्षरमतन्द्रितः ।
तर्पयेल्लक्षमेकं तु जुहुयाल्लक्षमेव च ।। ३७

आज्येन पायसेनापि पलाशकुसुमेन वा ।
ततः सिध्यति मन्त्रोऽयं भुक्तिमुक्तिफलप्रदः ।। ३८

तैलेन चाभिचारेषु अर्काणां समिधो हुनेत् ।
वश्ये कौसुम्भ कुसुमैर्बिल्वपत्रैर्धनाप्तये ।। ३९

ज्वररोगादिशान्त्यर्थमश्वत्थसमिधो हुनेत् ।
विद्वेषणे मारणे च वैभीतककरञ्जकौ ।। ४०

उच्चाटने च शत्रूणामपामार्गैर्हुनेत्तदा ।
प्रत्येकमष्टसाहस्त्रं जपेद् भक्त्या समाहितः ।। ४१

सम्यग्ज्ञानं समासाद्य मयि लीनो भविष्यति ।
लक्षपञ्चशतं जप्त्वा वृत्रारेः पदमाप्नुयात् ।। ४२

षष्टिलक्षजपेनैव लभते ब्रह्मणः पदम् ।
अशीतिलक्षं जप्त्वा तु नरो विष्णुत्वमाप्नुयात् ।। ४३

लक्षाणां तु शतं जप्त्वा साक्षाद्रुद्रत्वमाप्नुयात् ।
लक्षं जप्त्वा तथायुष्यं द्विलक्षं जपतः सुतान् ।। ४४

निष्कामो लक्षदशकं जप्त्वाप्येताऽविमुक्तकम् ।
विनियोगः समाख्यातः तज्जापे लक्षणं शृणु ।। ४५

विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः ।
जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसः ।। ४६

वाचिकोपांशुरुच्चैश्च द्विविधः परिकीर्तितः ।
मानसो मननध्यानभेदाद् द्वैविध्यमास्थितः ।। ४७

उच्चैर्जपादुपांशुश्च सहस्रगुण उच्यते ।
मानसश्च तथोपांशोः सहस्रगुण उच्यते ।। ४८

मानसाच्च तथा ध्यानमनन्तगुणमुच्यते ।
उमासहायं मां देवं नीलग्रीवं त्रिलोचनम् ।। ४९

ध्यात्त्वा जपेत्तथा मन्त्रं स चानन्तफलः स्मृतः ।
अथवा प्राकृतं भावं स्वीयमुत्सृज्य देहकम् ।। ५०

शिवोऽहमिति सञ्चिन्त्य साधयेदिदमुत्तमम् ।
उच्चैर्जपस्तु सर्वेषां यथोक्तफलदो नृणाम् ।। ५१

नीचैः श्रुतो न चेत् सोऽपि *श्रुतश्चेन्निष्फलो भवेत् ।
ऋषिं छन्दो दैवतं च ध्यायन् मन्त्रं जपेत्सुधीः ।। ५२

दीपस्तम्भनरच्छायां छायामभ्रस्य सत्तम ।
न जाप्यते विशुद्धात्मा शूद्रम्लेच्छाद्यसन्निधौ ।। ५३

एषोऽस्यैव विधिः प्रोक्तः षडक्षरजपस्य हि ।
उत्पत्तिमस्य मन्त्रस्य पुनरस्य निबोध मे ।। ५४

**ईश्वरः उवाच -**

सुगमं निगमान्त गोचरत्व-
गमागां करांग भोगसारम् (?)
नगमौलि सुतोनगाधिना स-
प्रियमेतज्जपतां न चाघसङ्घः ।।(?)

।। इति श्रीशिवरहस्ये दशमांशे शिवगौरीसंवादे
पञ्चत्रिंशोऽध्यायः ।।



---

* यथोक्तफलदः ।

## ।। षट्त्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

शिवेनोक्तं समासेन देव्यै देवेन कीर्तितम्* ।
शृणुष्व मुनिभिः सार्धं गणैः सुरगणैः सह ।। १

पुरा कल्पान्तरे शम्भुः सृष्ट्युपायमचिन्तयत् ।
पञ्चाननः स्वयं जातो मायास्वीकृतविग्रहः ।। २

तेजोराशिः स्वप्रकाशः स्वभासा भासयञ्जगत् ।
वदनानि महेशस्य प्रादुरासन् समन्ततः ।। ३

प्राक्प्रत्यक्दक्षिणोदीच्यां ऊर्ध्वं वर्णैश्च पञ्चभिः ।
त्र्यक्षाणि चाभ्रगङ्गेन्द्रशेखराणि समन्ततः ।। ४

तमपूर्वमुखं सौम्यं शुद्धस्फटिकसन्निभम् ।
बालेन्दुमकुटं त्र्यक्षं सुस्मितं करुणाधिकम् ।। ५

विराट् ततः प्रादुरभून्नकारात्मा प्रजापतिः ।
भूरभूच्च ततो विप्र प्रतिष्ठा शाश्वती ततः ।। ६

स एव भगवान् ब्रह्मा लोकसर्गे पितामहः ।
अघोरं दक्षिणं वक्त्रं प्रादुरासीन्महेशितुः ।। ७

दंष्ट्राकरालभ्रुकुटीनिटालाक्षं जगत्प्रभुम् ।
इन्द्रनीलसमाकारं त्र्यक्षं बालेन्दुभूषितम् ।। ८

स्वराडाख्यस्ततो रुद्रः शूलहस्तो विनिर्गतः ।
मकारवाच्यो भगवान् ज्योतिषामयनस्तदा ।। ९

---

* यथामातृकं लिखितम् । यत्पुरा इति कथनं युक्तं भवेत् । उक्तं कीर्तितं इति वारद्वय कथनस्यासाङ्गत्यमपि भज्येत ।

ऊधसद्योजातमुखं शम्भोः शारदाम्भोदसच्छवि ।
दीप्तत्रिणयनं सोमधामसामिशिखं मुने ।। १०

सम्राडाख्यस्ततो विष्णुः शिकारादुद्बभूव ह ।
आपस्तस्मात्समुद्भूता लोके सर्गे पुरा मुने ।। ११

वामदेवमुखं शम्भोः प्रादुर्भूतं तदावशात् ।
पद्मरागसमप्रख्यं फालेन्दुकृतशेखरम् ।। १२

त्र्यक्षं प्रसन्नवदनं वकाराख्यादपीश्वरः ।
वायुः प्राणशरीरात्मा जगतां संबभूव ह ।। १३

ईशानाख्यं मुखं शम्भोः पर्वशर्वरिनाथवत् ।
त्रिलोचनं चन्द्रचूडमुदभूद्यादिदैवतम् ।। १४

सदाशिवोपकाराच्च प्रादुर्भूतो महेश्वरात् ।
पञ्चबह्ममयाकारा मूर्तयोऽमी महेशितुः ।। १५

तुरीयाच्च तदोङ्कारः प्रादुर्भूतोऽर्थवाचकः ।
पञ्च सादाख्यरूपास्ते शिववक्त्राद्विनिर्गताः ।। १६

जगतामुपकाराय ब्रह्मविष्णुमहेश्वराः ।
सदाशिवश्चेश्वरश्च पञ्चब्रह्माण इत्यमी ।। १७

सृष्टिस्थित्युपसंहारतिरोधानानुदर्शकाः ।
पञ्चाक्षरोद्भवाश्चेत्थमुद्बभूव भवान् मुने ।। १८

मुखादिक्रमतःपूर्वं शम्भोरम्भोजसम्भवः ।
नियुक्तः सृष्टिकरणे पालने चाम्बुजेक्षणः ।। १९

रुद्रः संहरणे युक्तो नियुक्तः शूलपाणिना ।
तिरोधानेऽस्य जगत ईश्वरो विनियोजितः ।। २०

सदाशिवोऽनुग्रहणे जगतोऽस्य नियोजितः ।
महादेवेन विप्रेन्द्र भूतादिक्रमवर्णकैः ।। २१

एते हि पशवः प्रोक्ताः पतिरेषां महेश्वरः ।
प्रणवस्यार्थ एवेह अन्ये सर्वे क्रमेश्वराः (?)।। २२

प्रकाश्यः सर्ववर्णानां शिव एव महेश्वरः ।
पञ्चाक्षरमिदं श्रौतं शतरुद्रीयमध्यगम् ।। २३

वामदेवोऽस्य ऋषिराट् पङ्क्तिश्छन्दः प्रकीर्तितम् ।
सदाशिवोऽस्य देवो हि 'अं' बीजं शक्तिरुं ("उं") मुने ।।

ब्रह्मबीजमिदं मन्त्रं मं कीलक मुदीरितम् ।
अङ्गुलीदेहवक्त्रेषु न्यसेत्पञ्चाक्षरं मनुम् ।। २५

ओं नं तत्पुरुषाय मं अघोरं प्रचक्षते ।
शिं सद्योजातकाय वां वामायेति वा मुने ।। २६

यं ईशानायेति मुने नमोऽन्तेन न्यसेत्क्रमात् ।
अङ्गुलीषु हृदिन्यासं कृत्वाङ्गेषु मुनीश्वर ।। २७

सर्वज्ञधाम्ने हृदयं तृप्तिधाम्ने शिरस्तथा ।
शिखामनादिधाम्ने च कवचे च स्वतन्त्रकम् ।। २८

अलुप्तशक्तिधाम्ने च नेत्रत्रयमथास्त्रकम् ।
अनन्तशक्तिधाम्ने चेत्यङ्गन्यासं चरेत्क्रमात् ।। २९

व्याहृत्या दिग्बन्धनं चैव कृत्वा मूलेन रोधयेत् ।
प्रज्ञानघनमानन्दं कल्याणं शिवमव्ययम् ।। ३०

ध्यायेदहमिति स्वस्थो स्वस्थान्यक्षाणि धारयेत् ।
ध्यायेदेवं विरूपाक्षं षडक्षरविधौ मुने ।। ३१

**ध्यानम् -**

बिभ्रद् दोर्भिः कुठारं मृगमभयकरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मोत्तरीयः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्र)
ध्येयो मुक्तापरागद्युतिरमृतरसापूर्णकुम्भात्तहस्तः
त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिःकलोत्तुङ्गमौलिः ।।

एवं ध्यात्वा बहिः पीठे समाराध्यैवमेव हि ।
वामा ज्येष्ठा च रौद्री च काली कलविकारिणी ।। ३३

बलपूर्वा विकरणी बलप्रमथिनी तथा ।
दमनी सर्वभूतानां तथा विप्र मनोन्मनी ।। ३४

पीठानां शक्तयः सर्वा नव वै मुनिसत्तम ।
सम्पूज्यावरणे पूजा पूर्वपश्चादुदीच्यके ।। ३५

पूर्वे च मूर्तयः पूज्या पञ्चब्रह्माण इत्यथ ।
उमा चण्डीश्वरो नन्दी महाकालो गणेश्वरः ।। ३६

एकद्वित्रिचतुष्कोणे पूज्या दिग्देवताक्रमात् ।
पूजाहवनजापे च लक्षाणां च चतुष्टयम् ।। ३७

साज्यशुभ्रतिलैर्होमं पायसेन च कारयेत् ।
मन्त्रसिद्धिमवाप्नोति पञ्चाक्षरविधौ मुने ।। ३८

अत्यर्कानलसोमलोचन विभो त्वन्नेत्रजालैर्जगत् -
पुष्णात्योषधिजालमुग्रसुकरैर्वर्षत्यथान्नं पचेत् ।
नन्वास्ते जगतां च प्राणनकरी चाप्यायनी शङ्कर
त्वत्तोऽयं न विभाति भासनपरो देवस्त्वदात्मा शिवः ।।

।। इति श्रीशिवरहस्ये दशमांशे
षट्त्रिंशोऽध्यायः ।।



## ।। सप्तत्रिंशोऽध्यायः ।।

**स्कन्द उवाच -**

कदाचित्कौतुकाविष्टा गौरी पृत्छति शङ्करम् ।
रहस्ये हरवामाङ्के संस्था विप्र गिरीन्द्रजा ।। १

**गौरी(पृच्छति स्म)**

कर्मयोग्योन भवेत्सद्यः पतितो यदि सर्वथा ।
कर्मायोग्येन यत्कर्म कृतं तन्नरकाय हि ।। २

ततः कथं विमुच्येत पतितो विद्ययानया ।

**शिव उवाच -**

तथ्यमेतत्त्वया प्रोक्तं तथापि शृणु पार्वति ।। ३

रहस्यमिति मत्वा तद्गोपितं यन्मया पुरा ।
समन्त्रकं मां पतितः पूजयेद्यदि मोहतः ।। ४

नारकी स्यान्न सन्देहो मम पञ्चाक्षरं विना ।
अभक्षा वायुभक्षाश्च येचान्ये व्रतकर्शिताः ।। ५

तेषामेतैर्व्रतैर्नास्ति मम लोकसमागमः ।
भक्त्या पञ्चाक्षरेणैव यस्तु मां सायमर्चयेत् ।। ६

सोऽपि गच्छेत्तमध्वानं मन्त्रस्यास्यैव गौरवात् ।
तस्मात्तपांसि यज्ञाश्च व्रतानि नियमा यमाः ।। ७

पञ्चाक्षरार्चनस्यैते कोट्यंशेनापि नो समाः ।
बद्धो वाप्यथ मुक्तो वा पाशैः पञ्चाक्षरेण यः ।। ८

पूजयन्मां विमुच्येत सर्वपापैर्न संशयः ।
अशुद्धो वापि शुद्धो वा सकृत्पञ्चाक्षरेण यः ।। ९

पूजयन् पण्डितो मूढो मुच्येत पतितोऽपि वा ।
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा ।। १०

स ब्रह्माङ्गेन मां भक्त्या पूजयेद्यदि मुच्यते ।
पतितोऽपतितो वापि मन्त्रेणानेन पूजयेत् ।। ११

मम भक्तो जितक्रोधो भस्मरुद्राक्षधृग् द्विजः ।
अन्यपुण्ड्रधरेणायं न जप्यो मनुराडयम् ।। १२

अश्रौतमूर्ध्वपुण्ड्रं हि मन्त्रोऽयं श्रुतिमध्यगः ।
श्रौतपुण्ड्रात्सदा भस्म त्रिपुण्ड्रोद्धूलनान्मम ।। १३

रुद्राक्षधारणं पुण्ड्रं शिवलिङ्गमिदं द्वयम् ।
न त्याज्यं वैदिकैर्नित्यं तस्माद् धृत्वा जपेन्मनुम् ।। १४

गुरुवक्त्रादिमं लब्ध्वा श्रीमत्पञ्चाक्षरं मम ।
द्विजोत्तमाच्छाम्भवाच्च जपनीयः शताष्टकम् ।। १५

उपनीतौ यदा पित्रा दत्तः पञ्चाक्षरो यदि ।
गायत्र्या सह एवायं मन्त्रो जप्यो ह्यतन्द्रितः ।। १६

वेदाभ्यासाय वर्णी चेच्छतमष्टोत्तरं जपेत् ।
गृहस्थः पञ्चसाहस्त्रं जपेद् ध्यायन् हि मां सदा ।। १७

वन्यः सन्न्यासधर्मस्थः सन्न्यासी प्रणवेन हि ।
दशद्वादशसाहस्त्रं जपेतां तौ यथाबलम् ।। १८

स्त्रियः शूद्राः शाङ्‌कराश्च नमोऽन्तेन जपक्रमे ।
चोदितास्तान्त्रिकाणां तु तान्त्रिकेणैव वर्त्मना ।। १९

वैदिकानामयं मन्त्रो धर्मश्चायं मयोदितः ।
ब्राह्मणक्षत्रियविशां एव जाप्यो विधिक्रमः ।। २०

लब्ध्वा मन्त्रं गुरोर्वक्त्रान्मैत्र्यादिगुणसंयुतः ।
भस्मत्रिपुण्ड्रवीताङ्‌गो मद्ध्यानविहितात्मवान् ।। २१

ब्रह्मचर्यरतो भक्त्या मत्सायुज्यमवाप्नुयात् ।
किमतो बहुनोक्तेन भक्ताः सर्वेऽधिकारिणः ।। २२

पञ्चाक्षरप्रभावेण लोका देवा महर्षयः ।
तिष्ठन्ति शाश्वता धर्मे देवाः ! सर्वमिदं जगत् ।। २३

प्रलये समनुप्राप्ते नष्टे स्थावरजङ्‌गमे ।
सर्व प्रकृतिमापन्नं त्वत्तः प्रकृतकार्यभूत् ।। २४

एकोऽहं संस्थितो देवि न द्वितीयोऽस्ति कुत्रचित् ।
तदा वेदाश्च शास्त्राणि मन्त्रपञ्चाक्षरे स्थिताः ।। २५

ते नाशं नैव सम्प्राप्ता मच्छक्त्या ह्यनुपालिताः ।
ततः सृष्टिरभून्मत्तः प्रकृत्यात्मविभेदतः ।। २६

गुणमूर्त्यात्मनां चैव ततोऽवान्तरसंहतिः ।
तदा नारायणो मत्तः समुत्पन्नो महेश्वरि ।। २७

मत्त एव समुत्पन्नः पञ्चवक्त्रः प्रजापतिः ।
(सिसृक्षमाणो लोकांस्त्रीन्)
सिसृक्षमाणो लोकांस्त्रीन् शक्तोऽत्य *सहायवान् ।। २८

मुनीन् दश ससर्जादौ मानसानमिततेजसः ।
तेषां सृष्टि विद्ध्यर्थं मां प्रोवाच पितामहः ।। २९

प्रणम्य संस्तुवन्भक्त्या कृताञ्जालिरुमे तदा ।। ३०

**ब्रह्मोवाच -**

नमस्ते देवेश त्रिपुरहर सोमत्रिणयन
प्रभो शम्भो विश्वाधिक हर भवोग्रामितगुण ।
विभो बन्धो बन्धं हर हर शशिद्योतितशिरः
प्रसादं मे शश्वत् कुरु शिव भवान्मेऽद्य शरणम् ।। ३१

मत्पुत्राणां महादेव सर्जने देहि विक्रमम् ।
इत्येवं प्रार्थितस्तेन पञ्चवक्त्रधरो ह्यहम् ।। ३२

पञ्चाक्षराणि क्रमशः प्रोक्तवान् पद्मयोनये ।
स पञ्चवदनस्तानि गृणन् लोकपितामहः ।। ३३

वाच्यवाचक भावेन ज्ञातवान् मां महेश्वरम् ।
ज्ञातप्रयोगो विधिवत् सिद्धमन्त्रः प्रजापतिः ।।३४

पुत्रेभ्यः प्रददौ मन्त्रं मन्त्रार्थं च प्रजापतिः ।
ते लब्ध्वा मन्त्ररत्नं तत् साक्षाल्लोकपितामहात् ।। ३५

---

* सिसृक्षमाणो लोकांस्त्रीन् नाशक्नोदसहायवान् ।

मया ज्ञातेन मार्गेण मदाराधनकाङ्क्षिणः ।
मेरोस्तु शिखरे देवि मुञ्जवान्नाम पर्वतः ।। ३६

मत्प्रियः सततं श्रीमान् मद्‌गणैरपि रक्षितः ।
तस्याभ्याशे तपस्तीव्रं लोकसृष्टिसमुत्सुकाः ।। ३७

दिव्यवर्षसहस्रं तु वायु भक्षाः समाचरन् ।
तेषां भक्तिमहं दृष्ट्वा सद्यः प्रत्यक्षतामयाम् ।। ३८

मां दृष्ट्वा तुष्टुवुः सर्वे प्रणम्यैवं तपोरताः ।। ३९

**मुनय ऊचुः -**

ओमित्येकाक्षरोऽसिप्रकृतिविरहितः ओमितीदं च सर्वं ।
त्वत्तो भिन्नं न चैतत् शिव तव महिमां(?)वक्ति वेदः सदैव ।।

ईशानस्त्वं सर्वविद्याधिनाथः
उद्‌गीथस्त्वं सर्व भूतेश्वरश्च ।
तथैव त्वं मातृमेयादिहीनः
शब्दादीनां मूलमीशस्त्वमेव ।। ४१

नमस्ते रुद्र त्वं श्रुतिगतनमोऽन्तैकवचसां
भवानन्तो नाथो नतिकरणनानाविधतनुः ।
न हि त्वत्तो भिन्नं जगदपि च नानैव हि मृषा
नमः शेषोष्णीषिन् न हि शिव विवादः श्रुतिबलात् ।। ४२

महानात्मा मायाविरहिशरीरो मनुगतो
महेशो मन्त्रार्थस्त्वमसि मनुदाता मनसिगः ।
मनस्वी मध्यस्थो मरणजननाद्यन्तरहितः
मधुर्मन्ता माता भवसि हर मन्वर्चितपदः ।। ४३

शिवः शिष्ठो निष्ठो भवसि शिपिविष्टः शिवतरः
शिनीवाल्यः खल्यः शशिधरशिखासूक्तमहिमा ।
शिखीनेत्रो यन्त्रो भवसि शितिकम्ठस्त्वमसि दृक्
शतावर्तो हर्ता त्वमसि भवहर्तासि जगताम् ।। ४४

वाहीकृतोक्ष भगवन् हर वामदेव
वाताशनादिपरिभूषितदिव्यकाय ।
वास्तव्य वास्तुप महेश्वर वामनेत्रा-
क्लृप्तार्धकाय भगवन् अव वारणारे ।। ४५

यतो जातं विश्वं यमयति तथान्ते च यदृते
न हि स्वस्थं यस्मान्न भवति तथानन्यगतिकम् ।
यमात्मानं सर्वे न हि खलु विजानन्ति तमसः
परं पारं यत्तत् भवसि यततामेव नियतम् ।। ४६

**ईश्वरः उवाच** -

पञ्चाक्षरार्थस्तवमेतदेवं
पठन्त एवाध्यवसन्ति मां शिवे ।
त एव धन्या जगतीतलेऽस्मिन्
तेषां हि मुक्तिः करगा भवेत ।। ४७

वेदक्षीरमहार्णवोद्यतमहारुद्रोर्मिनामावली-
मध्यभ्राजितदिव्यहृद्यतम सत्पञ्चाक्षरीविद्यया ।
राजत्येव सुधाकरांशुचयवद्विप्रोनरो वा सुरो
घोरोवाप्यसुरोऽथवा गिरिसुते मुक्तो भवेत्पातकैः ।। ४८

।। इति श्रीशिवरहस्ये दशमांशे शिवगौरीसंवादे
पञ्चाक्षरमहिमानाम सप्तत्रिंशोऽध्यायः ।।

## ।। अष्टत्रिंशोऽध्यायः ।।

ईश्वरः (उवाच)

पञ्चाक्षरमृषिश्छन्दो बीजशक्ती च दैवतम् ।
न्यासं षडङ्गदिग्बन्धं विनियोगमशेषतः ।। १

प्रोक्तवानहमार्याणां जगतः सृष्टिहेतवे ।
ततस्तन्मन्त्रमाहात्म्यादृषयस्तपसेधिताः ।। २

सृष्टिं वितन्वते सम्यक् सदेवासुरमानुषाम् ।
अस्याः परमविद्याया स्वरूपमधुनोच्यते ।। ३

आदौ नमः प्रयोक्तव्यं शिवायेति ततः परम् ।
सैषा पञ्चाक्षरी विद्या सर्वश्रुतिशिरोगता ।। ४

शब्दजातस्य सर्वस्य बीजभूता समासतः ।
प्रथमं मन्मुखोद्गीर्णा सा ममैवात्मवाचिका ।। ५

तदा चामीकरप्रख्या पीनोन्नतपयोधरा ।
चतुर्भुजा त्रिणयना बालेन्दुकृतशेखरा ।। ६

पद्मोत्पलधरा सौम्य वरदाभयपाणिका ।
सर्वलक्षणसम्पन्ना सर्वाभरणभूषिता ।। ७

सितपद्मासनासीना नीलकुञ्चितमूर्धजा ।
अस्यां पञ्चविधावर्णाः प्रस्फुरद्रश्मिमण्डलाः ।। ८

पीतः कृष्णस्तथा धूम्रः श्वेताभो रक्त एव च ।
पृथक्प्रयोज्या एवैते बिन्दुनादविभूषिताः ।। ९

अर्धचन्द्राकृतिर्बिन्दुर्नादो दीप्तशिखाकृतिः ।
बीजं द्वितीयं बीजेषु मन्त्रस्यास्य वरानने ।। १०

गौतमोऽत्रिर्वरारोहे विश्वामित्रस्तथाङ्गिराः ।
भरद्वाजश्च वर्णानां क्रमशः ऋषयः स्मृताः ।। ११

गायत्र्यनुष्टुभ् त्रिष्टुभ् छन्दांसि बृहती विराट् ।
इन्द्रो रुद्रो हरिर्ब्रह्मा स्कन्दस्तेषां च देवताः ।। १२

मम पञ्चमुखान्याहुः स्थानं तेषां वरानने ।
पूर्वादिचोर्ध्वपर्यन्तं नकारादि यथाक्रमम् ।। १३

उदात्तः प्रथमो वर्णः चतुर्थश्च द्वितीयकः ।
पञ्चमः स्वरितश्चैव मध्यमो निहतःस्मृतः ।। १४

मूलविद्या शिवस्यैव सूत्रं पञ्चाक्षरं तथा ।
नामान्यस्य विजानीयात् सैव मे हृदयं मतम् ।। १५

नकारः शिर उच्येत मकारस्तु शिखोच्यते ।
शिकारं कवचं तद्वत् आकारो नेत्रमुच्यते ।। १६

यकारोऽस्त्रं नमः स्वाहा वषड्ढुं वौषडित्यपि ।
फडित्यपि च वर्णानां मतङ्गत्वं यथा तथा ।। १७

तवापि मूलमन्त्रोऽयं किञ्चिद्भेदसमन्वयात् ।
तत्रास्य पञ्चमो वर्णो द्वादशस्वरभूषितः ।। १८

तस्मादनेन मन्त्रेण मनोवाक्कायभेदतः ।
आवयोरर्चनं कुर्याज्जपहोमादिकं तथा ।। १९

यथाप्रज्ञं यथाश्रद्धं यथाकालं यथास्मृति ।
यथाशक्ति यथासम्पत् यथायोगं यथारति ।। २०

यदा कदापि वा भक्त्या यत्रकुत्रापि वा कृता ।
येन केनापि वा देवि पूजा मुक्तिं नयिष्यति (?) ।। २१

मय्यासक्तेन मनसा यत्कृतं मम सुन्दरि ।
तत्प्रियं च शिवं चैव क्रमेणाप्यक्रमेण वा ।। २२

तथापि मम भक्ता ये न सन्ति विवशाः पुनः ।
तेषामर्थेन शास्त्रेषु मयैव नियमः कृतः ।। २३

पञ्चाक्षरक्षपितपापगणं च कृत्स्नं ।
रक्षाभिलिप्तशिरसामभिरक्षकेयम् ।। २४

रूक्षाभवन्त्यखिलराक्षसयक्षसङ्घाः
सन्धुक्षिताः परिभवन्ति शिवाक्षजालैः ।
प्रातः प्रदोषे निशि वासरे वा
त्र्यक्षानुरक्तहृदयो जपति प्रमोदात् ।। २५

पञ्चाक्षरं परमपावनमेतदेव ।
रुद्रत्वदायि गिरिंजे विरजो भवेत्सः ।। २६

वेदा यज्ञा व्रता ये शिखिमुखविहितं होमजालं च कृत्स्नं
कन्या पृथ्वी च वाणी द्विजगणकलितामप्यधन्यो भवेत ।
श्रीपञ्चाक्षरजापनोज्झितमतिर्यस्तस्य किं सेवनैः
जाप्यं त्वेतदनुक्षणं द्विजगणैः पञ्चाक्षरं मे परम् ।। २७

जाप्यं त्यक्त्वा शिवे यो जपति मनुगणं त्याज्यमेवेहमूढो
गूढं गूढपदाङ्गशोभि सुदृढं [1]. . . . . . . . . . ।
सन्त्यज्यान्त्यज सम्भवप्रभवयो वेदानुवादेरतो
विप्रोऽपि श्वपचाभ एव सदृशो(?) विष्ठासु तिष्ठेच्छतम् ।।

षडक्षरपरायणा धवलभस्मसम्भूषणा
महाघगिरिदारणा भुवि भवन्ति त्यक्तेषणाः ।
विदूषणपरा नरा यमकरोरुबाणाहता
तदीयवरवाहनोत्तरविषाणाकोणाहताः ।। २९

पञ्चाक्षरं पावनमुच्चरन्तः
पतिं पशूनां हृदि भावयन्तः ।
शान्ताः कृतान्तान्तकमर्चयन्तः
क्षेत्रेषु तिष्ठन्ति सदैव सन्तः ।। ३०

पञ्चाक्षरावृत्तिकृतां क्षरेदघं
क्षारं भुवं त्यज्य तदक्षरं व्रजेत् ।
न यक्षरक्षःप्रभवं भयं भवेत्
त्र्यक्षप्रसादल्लभते [2]फलाक्षयम् ।। ३१

---

1. पञ्चाक्षरं मत्प्रियम् इति योजना संगता बवेत् ।
2. अक्षयं फलं लभते इत्यर्थेऽयं प्रयोगः इति भाति ।

प्रणवाद्यन्तमुमे यतिर्जपेत्
नियतिर्वै श्रुतिचोदिता मृषा न ।
तव बीजमुमे विधारयन्
जपतां जाप्यमिदं फलायते ।। ३२

पुण्यानि वर्धयति पापततिं धुनोति
मुख्याविमुक्तसदने वसतिं करोति ।
पञ्चाक्षरं मम मनुं जपति स्थिरान्त-
स्तस्याम्बिके परममुक्तिपदं ददाति ।। ३३

।। इति श्रीशिवरहस्ये दशमांशे
अष्टत्रिंशोऽध्यायः ।।



## ।। एकोनचत्वारिंशोऽध्यायः ।।

**स्कन्द उवाच -**

तत्रादौ सम्प्रवक्ष्यामि मन्त्रसङ्ग्रहणं शुभम् ।
यं विना निष्फलं जाप्यं येन वा सफलं लभेत् (भवेत्) ।। १

आज्ञाहीनं क्रियाहीनं श्रद्धाहीनं वरानने ।
आज्ञप्तं दक्षिणाहीनं सदा जप्यं च निष्फलम् ।। २

आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं ममा(दा)त्मकम् ।
एवं च दक्षिणासिद्धं मन्त्रसिद्धं महत्फलम् ।। ३

उपगत्य गुरुं नत्वा ह्यार्यं तत्वार्थवेदिनम् ।
जापिनं सुगुणोपेतं ध्यानयोगपरायणम् ।। ४

जितेन्द्रियं सदाचारं भावशुद्धिसमन्वितम् ।
वाचा च मनसा चैव कायेन द्रविणेन च ।। ५

आचार्यं पूजयेच्छिष्यः सर्वदातिप्रयत्नतः ।
हस्त्यश्वरथरत्नानि क्षेत्राणि च गृहाणि च ।। ६

भूषणानि च वासांसि धान्यानि च धनानि च ।
एतानि गुरवे दद्यात् भक्त्या च विभवे सति ।। ७

वित्तशाठ्यं न कुर्वीत य इच्छेत्सिद्धिमात्मनः ।
पश्चान्निवेदयेदेवमात्मानं सपरिच्छदम् ।। ८

एवं सम्पूज्य विधिवद्यथाशक्ति त्ववञ्चयन् ।
आददीत गुरोर्मन्त्रं ज्ञानं चैव क्रमेण तु ।। ९

एवं तुष्टो गुरुः शिष्यं पूजकं वत्सरोषितम् ।
सु(शु)श्रूषुमनहङ्कारं शान्तं शुचिमुपोषितम् ।। १०

स्नापयित्वा विशुध्यर्थं पूर्वं कुम्भधृतेन वै ।
जलेन मन्त्रसिद्धेन पुण्यद्रव्ययुतेन च ।। ११

अलङ्कृत्य सुवेषं च गन्धस्वर्णविभूषणैः ।
पुण्याहं वाचयित्वा च ब्राह्मणानभिपूज्य च ।। १२

समुद्रतीरे नद्यां वा गोष्ठे देवालयेऽपि वा ।
शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ ।। १३

नक्षत्रे शुभयोगे च सर्वदोषविवर्जिते ।
अनुगृह्य ततो दद्याद् ज्ञानं मम यथाविधि ।। १४

स्वरेणोच्चारयेत्सम्यगेकान्ते विप्रसन्निधौ ।
उच्चैरुच्चारयित्वा तमावयोर्मन्त्रमुत्तमम् ।। १५

शुभं चास्तु शिवं चास्तु शोभनं च प्रियं त्विति ।
एवं दद्याद्गुरुर्मन्त्रमाज्ञां चैव समाहितः ।। १६

सङ्कल्प्य प्रजपेन्नित्यं पुश्चरणपूर्वकम् ।
यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्त्रकम् ।। १७

अनश्नन् तत्परो भूत्वा जपेन्नित्यमतन्द्रितः ।
जपेदक्षरलक्षं वै चतुर्गुणितमादरात् ।। १८

यः पुरश्चरणं कृत्वा नित्यजापी भवेत्पुनः ।
तस्य नास्ति समो लोके स सिद्धः सिद्धिदो भवेत् ।। १९

स्नानं कृत्वा शुचौदेशे बध्वारुचिरमासनम् ।
त्वां मां च हृदि संञ्चिन्त्य शौचाचारसमन्वितः ।। २०

प्राङ्मुखोदङ्मुखो वापि मौनी चैकाग्रमानसः ।
विशोध्य पञ्चतत्वानि दहनाप्लावनादिभिः ।। २१

मन्त्रन्यासादिकं कृत्वा सङ्कलीकृतविग्रहः ।
आवयोर्विग्रहं ध्यायन् प्राणापानौ नियम्य च ।। २२

विद्यास्थानं स्वरूपं च ऋषिछन्दोऽधिदैवतम् ।
बीजं शक्तिं कीलकं च स्मृत्वा पञ्चाक्षरीं जपेत् ।। २३

उत्तमं मानसं जाप्यमुपांशुं मध्यमं विदुः ।
अधमं वाचिकं प्राहुरागमार्थविशारदाः ।। २४

उत्तमं शिवदैवत्यं मध्यमं विष्णुदैवतम् ।
अधमं ब्रह्मदैवत्यमित्याहुरनुपूर्वशः ।। २५

यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्विद्वान् वाचिकोऽयं जपः स्मृतः ।। २६

जिह्वामात्रपरिस्पन्दमीषदुच्चरितोऽपि वा ।
अपरैरश्रुतः किञ्चिच्छ्रुतस्तूपांशुरुच्यते ।। २७

धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थस्मृतिपूर्वं यः कथ्यते मानसो जपः ।। २८

वाचिकस्त्वेक एव स्यादुपांशुः शतमुच्यते ।
सहस्रं मानसः प्रोक्तः सगर्भस्तच्छताधिकः ।। २९

---

अगर्भः - आदावन्ते च प्राणायामश्चेदगर्भो जपः ।
प्रत्यावृत्या प्राणायामे तु सगर्भः जपः ।।

प्राणायामसमायुक्तः सगर्भो जप उच्यते ।
आद्यन्तयोरगर्भो यः प्राणायामः प्रशस्यते ।। ३०

चत्वारिंशसमावृत्तिं प्राणानायम्य संस्मरेत् ।
[1]अङ्गुल्याजपसङ्ख्यानमेकमेकमुदाहृतम् ।। ३१

पञ्चकं त्रिकमेकं वा प्राणायामं समाचरेत् ।
अगर्भं वा सगर्भं वा सगर्भस्तत्र शस्यते ।। ३२

सगर्भादपि साहस्रः सन्ध्यानो जप उच्यते ।
एवं पञ्चविधेष्वेकः[2] कर्तव्यः शक्तितो जपः ।। ३३

रेखयाष्टगुणं विद्यात्पुत्रजीवैः शताधिकम् ।
शतंस्याच्छङ्खमणिभिः प्रवालैस्तु सहस्रकम् ।। ३४

स्फाटिकैः शतसाहस्रं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैः दशलक्षं तु सौवर्णैः कोटिरुच्यते ।। ३५

कुश ग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ।
त्रिंशदक्षैः कृता माला धनदा जपकर्मणि ।। ३६

सप्तविंशतिसङ्ख्यातैः कृता पुष्टिप्रदा भवेत्।
पञ्चविंशतिसङ्ख्याकैः कृता मुक्तिं प्रयच्छति ।। ३७

---

1. इदं श्लोकार्धमुत्तरत्र कथनीयम् भवति ।
2. वाचिकः उपांशुःमानसः सगर्भः अगर्भः इति जपस्य पञ्चविधत्वमुक्तं भवति ।

अक्षैस्तु पञ्चदशभिराभिचारफलप्रदा ।
अङ्गुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशनी ।। ३८

मध्यमा धनदा शक्तिं करोत्येषा ह्यनामिका ।
कनिष्ठाऽऽकर्षणी प्रोक्ता जपकर्मणि शोभना ।। ३९

अङ्गुष्ठेन जपेज्जप्यमन्यैरङ्गुलिभिः सह ।
अङ्गुष्ठेन विना जप्यं कृतं यदफलं भवेत् ।। ४०

गृहे जपं समं विद्याद्गोष्ठे शतगुणं विदुः ।
पुण्यारण्ये तथारामे सहस्रगुणमुच्यते ।। ४१

अयुतं पर्वते तीरे नद्यां लक्षमुदाहृतम् ।
कोटिं देवालये प्राहुः परार्धं बिल्वमूलके ।। ४२

शिवलिङ्गाग्रतो देवि जपस्यानन्त्यमुच्यते ।
सूर्यस्याग्नेर्गुरोरिन्दोः शाम्भवानां च सन्निधौ ।। ४३

विप्राणां च गवाश्वत्थमूले वै शस्यते जपः ।
तत्पूर्वाभिमुखं वश्यं(ये) दक्षिणं त्वाभिचारके ।। ४४

पश्चिमं धनदं विद्यादुत्तरं शान्तिदं भवेत् ।
अन्यासु च दिशास्वेवं वश्याकर्षणविद्विषि ।। ४५

मारणोच्चाटने जप्यो मनुरेष समाहितैः ।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशोऽप्यकच्छकः ।। ४६

अपवित्रकरोऽशुद्धो विलपन् प्रहसंस्तथा ।
[1]क्रोधोमंदः क्षुधा तन्द्रा निद्रालस्यादिवर्जितः ।। ४७

दर्शनं च स्वनीचानां वर्जयेज्जपकर्मणि ।
आचामेत् सम्भवे तेषां स्मरेद्वा मां त्वयासह ।। ४८

तप्तचक्राङ्कितान् व्रात्यान् न पश्येत्स्त्रीं(?)रजस्वलाम् ।
जपे न सहभाषेत मौनी मद्ध्यानमानसः ।। ४९

न चान्यस्पर्शनं कार्यं जपकर्मणि शोभने ।
एतेषां सम्भवे देवि प्राणायामं समाचरेत् ।। ५०

ज्योतींषि च प्रपश्येद्वा कुर्याद्भस्मविलेपनम् ।
अनासनः शयानो वा गच्छन्नुत्थित एव वा ।। ५१

रथ्यायामशिवस्थाने न जपेत्तिमिरावृते ।
प्रसार्य न जपेत्पादौ [2]धून्वन् केशानथाशुचिः ।। ५२

यानशय्याधिरूढो वा चिन्ताव्याकुलितोऽपि वा ।
शक्तस्य सर्वमेवैतत् अशक्तः शक्तितो जपेत् ।। ५३

शावसूतिकरे चापि दशधा प्रजपेन्मनुम् ।
किमत्र बहुनोक्तेन ह्येष जापविधिः शिवे ।। ५४

---

1. मदक्रोधक्षुधातन्द्रानिद्रालस्यादिवर्जितः इति सुगमः पाठः ।

2. धुन्वन्नित्यपि ।

ईश्वरः - (उवाच)

पापानां जपतां प्रभञ्जनकरीं विद्यां च पञ्चाक्षरीं
मत्पादप्रवणात्मनां हितकरीमाराच्च मुक्तिङ्करीम् ।
सर्वाघौघविदारिणीं च ममताहन्त्रीं च सम्पत्करीं
दुःखध्वान्तनिवारिणीं भवमहाम्भोधेश्च सन्तारिणीम् ।। ५५

अन्तर्भावितशम्भुपाद कमल ध्यानानुरागादरः ।
स्वात्मानं शिवमेव भावयति यो देहेन्द्रियाद्युज्झितं-
ब्रह्मानन्द सुधाब्धिमग्नहृदयः पञ्चाक्षराद्याश्रयः ।। ५६

।। इति श्रीशिवरहस्ये दशमांशे
एकोनचत्वारिंशोऽध्यायः ।।



## ।। चत्वारिंशोऽध्यायः ।।

ईश्वरः (उवाच)

सदाचारो जपन् जुह्वद् ध्यायन् भद्रं समश्नुते ।
आचारः परमो धर्मो ह्याचारः परमं धनम् ।। १

आचारः परमा विद्या ह्याचारः परमा गतिः ।
आचारहीनः पुरुषो लोके भवति निन्दितः ।। २

परत्र च सुखी न स्यात्तस्मादाचारवान् भवेत् ।
यस्य यद्विहितं कर्म वेदे शास्त्रेषु कथ्यते ।। ३

तस्य तेन समाचारः सदाचारो न चेतरः ।
सद्भिराचरितत्वाच्च सदाचारः स उच्यते ।। ४

सदाचारस्य तस्याहुरास्तिक्यं मूलकारणम् ।
आस्तिक्यं चेत्प्रमादाद्यैः सदाचारादपि च्युतः ।। ५

न दुष्यति नरो नित्यं तस्मादस्तिक्यतां व्रजेत् ।
यथेहास्ति सुखं दुःखं सुकृतैर्दुष्कृतैरपि ।। ६

इहचामुत्र चास्तीति मतिरास्तिकतोच्यते ।
रहस्यमन्यद्वक्ष्यामि गोपनीयमिदं प्रिये ।। ७

न वाच्यं यस्य कस्येति(कस्यापि) नास्तिकस्याथवा पशोः ।
सदाचारविहीनस्य पतितस्यान्त्यजस्य च ।। ८

पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे ।
गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ।। ९

अशुचेर्वा शुचेर्वापि मन्त्रोऽयं न च निष्फलः ।
अनाचारवतां पुंसामविशुद्धषडध्वनाम् ।। १०

अनादिष्टोऽपि मूढस्य मन्त्रोऽयं न च निष्फलः ।
अन्त्यजस्यापि मूढस्य मूर्खस्य पतितस्य वा ।। ११

निर्मर्यादस्य नीचस्य मन्त्रोऽयं न च निष्फलः ।
सर्वावस्थां गतस्यापि मयि भक्तिमतः प्रिये ।। १२

सिध्यत्येष न सन्देहो नापरस्य तु कस्यचित् ।
न लग्नतिथिनक्षत्रवारयोगादयः प्रिये ।। १३

अस्यात्यन्तमपेक्षा स्यात् नैव सुप्तः सदोत्थितः ।
न कदाचन कस्यापि रिपुरेष महामनुः ।। १४

असिद्धोऽथ सुसिद्धो वा साध्यो वा यो भविष्यति ।
सिद्धेन गुरुणादिष्टः सुसिद्ध इति कथ्यते ।। १५

असिद्धेनापि वा दत्तः सिद्धः साध्यस्तु केवलम् ।
असाधितः साधितो वा सिद्ध्यत्येष न संशयः ।। १६

श्रद्धातिशययुक्तस्य मयि मन्त्रे तथा गुरौ ।
तस्मान्मन्त्रान्तरांस्त्यक्त्वा सापायानतियत्नतः ।। १७

आश्रयेत्परमां विद्यां हृद्यां पञ्चाक्षरीं बुधः ।
मन्त्रान्तरेषु सिद्धेष्वप्येष मन्त्रो न सेत्स्यति ।। १८

अस्मिन् सिद्धे महामन्त्रे तेऽपि सिद्धा भवन्त्युत ।
यथा देवेष्वलब्धेषु न लभ्योऽहं महेश्वरि ।। १९

मयि लब्धे तु ते लब्धा मन्त्रेऽप्येष समो विधिः ।
ये दोषाः सर्वमन्त्राणां न तेऽस्मिन् सम्भवन्त्यपि ।। २०

मन्त्रोऽयं विनियुज्येत सर्वकार्येषु शङ्करि ।
तथापि नैनं क्षुद्रेषु फलेषु प्रतियोगिषु ।। २१

सहसा विनियुञ्जीत यस्मादेष महाफलः ।

**स्कन्द उवाच -**

एवं साक्षान्महादेव्यै महादेवेन शूलिना ।। २२

हिताय जगतामुक्तः पञ्चाक्षरविधिः शुभः ।
य इदं कीर्तयेद्विद्वान् शृणुयाद्वा समाहितः ।। २३

सर्वपापविनिर्मुक्तः स याति परमां गतिम् ।। २४

**ईश्वर उवाच -**

परीक्ष्य शिष्यं विधिवच्चिरोषितं
शान्तं च दान्तं भवतान्तमद्रिजे ।
दद्याच्च विद्यां सकलाघभेद्यां
पञ्चाक्षरीमेव भवाधिशान्त्यै ।। २५

**ईश्वरः उवाच -**

गुरुं परीक्षेत विशिष्य शिष्यो
भवैकशोषेऽप्यविशोष्यमानसम् ।

शान्तं च दान्तं जितमानमोह-
मदाद्यविद्याच्छिदमीक्षणेन ।। २६

भस्मत्रिपुण्ड्रपरिमण्डितफालदेश-
मुग्रार्चनव्रतपरं विमलं प्रशान्तम् ।
नित्यं त्रिणेत्रपदपङ्कजभावपात्रं
त्रातारमत्र च परत्र च तं प्रपद्ये ।। २७

स एव पशुपाशहृत् भवति भुक्तिमुक्तिप्रदो
भवेत किल शक्तितो विमलभक्तिभावः शिवे ।
न तं गुरुजनं द्रुहे सकलकायकर्मेन्द्रियैः
विशिष्य मनसापि वा विधिरमुष्य शिष्यस्य हि ।। २८

यस्य स्यान्मयि भक्तिरद्रिवरजे तत्तादृशी सा गुरौ
तस्यायं मनुरेव मुक्तिपरमानन्दं दिशेत्केवलम् ।
वेदानन्तरहस्यमस्य हृदिगं तस्यास्यपद्मे वसेत्
नित्यं यस्य मनोः प्रभावभवनं तस्यार्थ एवं स्फुरेत् ।।

नाधन्यः किल संश्रयेत भुवने पञ्चाक्षरं केवलम्
मान्यस्त्वन्यमनुं विहाय जपकृत् तस्यान्यधर्मैश्च किम् ।
किं वन्याश्रमधर्मसम्भवफलैःसन्यासविन्यासतः
स्वर्धुन्याप्लुतविग्रहाग्रहपरैस्तीर्थाटनेनापि किम् ।। ३०

त्यक्त्वा पञ्चाक्षरं मे क्षरमनुविभवं भावयन्तोऽप्यभव्याः
आधिव्याध्यादिविद्धा दृढतरनियमैर्याम्यधामेषु( ?)सक्ताः ।

बुद्धा बौद्धास्त एव क्षितिसुरनिकरा भासुराचारचोराः
घोरा दुःखातिरुद्धाः क्षितिधररमणं यन्ति नो धाम(?)मईशे ।।

जात्यन्धो नहि वेत्ति रत्नविषयं षण्डः कुतः स्त्रीसुखं
कन्याऽसत्पुरुषेण सौख्यपदवीं वन्ध्या प्रसूतिक्रियाम् ।
काको हंसगतिं खरो मृदुरवं सौख्यं दरिद्रो यथा
श्वानः सिह्मपराक्रमं भुवि तथा नो जानते मन्मनुम् ।।३२

केदारे तुहिनाद्रिशेखरभवासङ्गे तथा सागरे
वाराणस्यां प्रयागे कुरुचरसदने पुष्करे नैमिशे वा ।
ओङ्कारे भृगुतुन्दचामरमहाकाले तथा त्रयम्बके
श्रीरुद्रोत्तमकोटिके मम शिवे पञ्चाक्षरावृत्तिभाक् ।।

श्रीकण्ठे गजकानने द्रुतिपुरे जप्ये च कुम्भीश्वरे
श्वेताख्ये विपिने तथार्जुनवने वृद्धाचले गानगे ।
काञ्च्यां शोणाचले वा श्रुतिवनकमले कालहस्त्यां तथाग्रे
हालास्ये तरसिन्धुकोणगशियो मेश्वरे जाप्यतः ।। (?)

तत्रैवं यदि चन्द्रचूडचरणाम्भोजार्चको भस्मधृक्
रुद्राक्षामलदेहयुक्तहृदयः पञ्चाक्षराष्टं शतं (?)
जप्त्वादेवमथो प्रदक्षिणनमस्कारैश्चमुक्ताघकः ।। ३५

गङ्गां तुङ्गां च कृष्णां कमलजवनितां नर्मदां बाहुदां तां
तापीं वेणीं च नीरां अविभववहिनीं गोदकां सह्यजाताम् ।
पम्पां कम्पां च ताम्रां शिवगिरितनयामाम्रिकासीगराणां (?)
तीर्थे स्नानं तथासां तटगतशिवदृक् दिव्यपञ्चाक्षरास्यः।। (?)

भवेत(?) भसिताङ्गको विमलपुण्यरुद्राक्षधृक्
शतश्रुतिशिरोगतं परमरुद्रमध्यस्थितम् ।
षडक्षरजपादरो भवति भाग्यपूर्णो जनः
शतं त्रिशतमम्बिके जयति पापतूलानलम् ।। ३७

द्विजोऽन्त्यजवरोऽपि वा परमसङ्करस्तस्करो ।
मयस्करपदार्चको यदि भवेत्स धन्यो जनः ।। ३८

जपन्नक्तं भक्तं फलकुलमथाश्नन् द्विजवरो
भजेच्छक्तो रिक्तोऽपि च स मुक्तो हि भवति ।
मम क्षेत्रेष्वीशे वसति शरदं चैकमधुना
मनुं धन्यो मान्यो भवति किल सामान्यजनुभाक् ।। ३९

।। इति श्रीशिवरहस्ये दशमांशे
चत्वारिंशोऽध्यायः ।।



## ।। एकचत्वारिंशोऽध्यायः ।।

**मुनिरुवाच - (जैगीषव्य उवाच)**

नमस्ते तारकाराते श्रुतः पञ्चाक्षरोद्भवः ।
धन्योऽस्मि कृतकृत्योऽस्मि शिवविद्याश्रवादहम् ।। १

केषु स्थानेषु भगवान् पूजनीयो महेश्वरः ।
तत्र सम्पूजितो देवः कथं तुष्यति मे वद ।। २

स विधानं रहस्यं वै यदिस्यान्मयि ते दया ।

**सूत उवाच -**

तदा मुनेर्वचः श्रुत्वा ध्यात्वा नत्वा महेश्वरम् ।। ३

जैगीषव्याय मुनये प्राह लिङ्गार्चनक्रमम् ।
स ध्यानमन्त्रयन्त्रादि प्रदक्षिणनतेः पदम् ।। ४

कालाधिकारभेदं च द्विजाः ! शङ्कर सम्भवः ।

**स्कन्द उवाच -**

अथ ते सम्प्रवक्ष्यामि शिवलिङ्गं समासतः ।। ५

यस्य विज्ञानमात्रेण विमुक्तो मानवो भवेत् ।
लयनात्सर्वजगतां लिङ्गमित्युच्यते मुने ।। ६

शिवश्चेतनरूपो हि जडं जगदिति स्थितम् ।
तेन चैतन्यरूपेण जडमेतत्प्रकाशते ।। ७

शिवो नैव जडः साक्षात् स्वप्रकाशैकलक्षणः ।
अतः साक्षी शिवः साक्षात् स्वे धाम्नि समवस्थितः ।। ८

स्वयञ्ज्योतिर्महादेवो ह्यलिङ्गो लिङ्गसङ्गतः ।
तस्य भासा जगद्भाति जगज्जडमिदं मुने ।। ९

अलिङ्गस्यापि देवस्य लिङ्गं श्रुतिशिरोगतम् ।
योगिध्येयमिदं लिङ्गं शम्भोर्निगमचोदितम् ।। १०

आगमोक्तानि लिङ्गानि भौतिकानि मुनीश्वर ।
अयोगी भौतिके लिङ्गे योगी सर्वत्र भावयेत् ।। ११

सर्वावभासको देवो यथा हृदि विराजते ।
तथा सर्वगतः शम्भुः देशदिक्कालवर्जितः ।। १२

लिङ्गे सम्पूजितो विप्रैर्भुक्तिं मुक्तिं प्रयच्छति ।
अलिङ्गोऽपि महादेवः शिवलिङ्गे समर्चितः ।। १३

भस्मत्रिपुण्ड्ररुद्राक्षधारकेणार्चितं यदि ।
लिङ्गं शम्भोर्मुक्तिदायि बिल्वपत्राक्षतार्चितम् ।। १४

भौतिकेष्वपि लिङ्गेषु पूजनीयो महेश्वरः ।
देव्या कैलासशिखरे पृष्टस्तुष्टो महेश्वरः ।। १५

शिवलिङ्गार्चनस्यास्य प्रभावमवदन्मुने ।

**देव्युवाच -**

देव देव महादेव केषुस्थानेषु पूजितः ।। १६

ददासि भुक्तिं मुक्तिं च शिवज्ञानं च शङ्कर ।
किं तल्लिङ्गं कश्च लिङ्गी तदर्चनविधिं शिव ।। १७

निवेद्य भुक्तिं शक्तिं च वद मे करुणाकर ।

**ईश्वर उवाच -**

लिङ्गोत्पत्तिं प्रवक्ष्यामि शृणुष्व कमलानने ।। १८

यच्छ्रुत्वा मुनयः सद्यो [1]हृद्यज्ञानं जहाति(त्यजन्ति) च ।
पूर्वमेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।। १९

विवादः सुमहानासीद् ब्रह्मविष्ण्वोः परस्परम् ।
अहं कर्ताह्यहं हर्ता न मत्तोऽन्यो जगत्प्रभुः ।। २०

एवमाह हरिं ब्रह्मा ब्रह्माणं च हरिस्तथा ।
तयोर्दर्पापहाराय प्रबोधार्थं च देवयोः ।। २१

कन्दर्पदर्पहा देवः शर्वः सर्पाङ्गकल्पकः ।
मध्ये प्रादुरभूत्साम्बो ज्योतिर्लिङ्गाकृतिः शिवः ।। २२

तयोः समभवल्लिङ्गमैश्वरं तैजसं परम् ।
ज्वालामालावृतं दिव्यमप्रमेप्यमनूपमम्[2] ।। २३

योजनाऽयुतविस्तीर्णं ज्वालामालाविराजितम् ।
ज्वालाभिर्मोहितौ तस्य लिङ्गस्य सुरसत्तमौ ।। २४

तदा विस्मयमापन्नौ पश्यन्तावमरौ सदा ।
गतावूर्ध्वमधस्तस्य सम्प्रधार्य परस्परम् ।। २५

अधो द्रष्टुमगादिष्णुरूर्ध्वमस्य पितामहः ।
अदृष्टं तमधश्चोर्ध्वं तौ समेत्य परस्परम् ।। २६

---

1. हृदि+अज्ञानम् हृद्यज्ञानम् ।
2. अनुमपमम् इत्यर्थेऽयं प्रयोगः ।

कृताञ्जलिपुटौ भूत्वा स्तोत्रमेतदगायताम् ।

**ब्रह्मविष्णू ऊचतुः -**

अनादिदेव देवेश विश्वेश्वर महेश्वर ।। २७.

सर्वज्ञ ज्ञानविज्ञानप्रदाज्ञाननिवर्तक ।
अनेककान्तिसम्पन्न अनन्तासनसंस्थित ।। २८

अनन्तशक्तिसम्भोग परमेश नमोऽस्तु ते ।
परात्पर परातीत उत्पत्तिस्थितिकारण ।। २९

सर्वार्थद महाशर्व सर्वकार्यपरायण ।
बहुरूप महारूप सर्वरूपामरोत्तम ।। ३०

पशुपाशार्णवातीत मायाशक्तिविवर्जित ।
स्वभावनिर्मलामेय निर्गुणाकाशमध्यग ।। ३१

योग(योगि)साङ्ख्यैः(सङ्ख्या)दुरापात्मन्निगमान्तैकगोचर ।
निरञ्जन निराधार स्वाधार निरूपप्लव ।। ३२

स्वभावभासकामेय भास्यभासकवर्जित ।
सर्वेन्द्रियादिरहित भावाभावविवर्जित ।। ३३

नमस्ते शिवलिङ्गाय अलिङ्गाय नमोऽस्तुते ।
नमस्ते गुह्यलिङ्गाय परलिङ्गाय लिङ्गिने ।. ३४

नमस्ते देवलिङ्गाय ज्योतिर्लिङ्गाय ते नमः ।
नमस्ते सूक्ष्मलिङ्गाय बुद्धिलिङ्गाय ते नमः ।। ३५

नमः पर्वतलिङ्गाय [1]भावलिङ्गाय ते नमः ।
जगत्कारणलिङ्गाय जगतां पतये नमः ।। ३६

नमो हिरण्यलिङ्गाय दिव्यलिङ्गाय ते नमः ।
नमस्ते रुद्र मन्यो च उतोत इषवे नमः ।। ३७

नमस्ते अस्तु धन्वने कराभ्यां ते नमो नमः ।
या ते रुद्र शिवा घोरा तनूस्तुभ्यं नमोनमः ।। ३८

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय ते नमः ।
सहस्रपाणये तुभ्यं नमो मीढुष्टमाय ते ।। ३९

कपर्दिने नमस्तुभ्यं कालातीताय ते नमः ।
नमस्ते ततशूलाय विज्याय [2]धनुषे नमः ।। ४०

हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः ।
सेनान्ये ते नमो देव दिशां च पतये नमः ।। ४१

नमस्ते हरिकेशाय नमस्ते (त) उपवीतिने ।
नमो भवस्य हेत्यै ते जगतां पतये नमः ।। ४२

पुष्टानां पतये शम्भो क्षेत्राणां पतये नमः ।
पशूनां पतये तुभ्यं पथीनां पतये नमः ।। ४३

आततायिन् नमस्तुभ्यं वनानां पतये नमः।
नमस्ते रोहितायाथ वृक्षाणां पतये नमः ।। ४४

---

1. भवस्येदं भावम् तादृशं लिङ्गं तस्मै ।
2. नमस्ते विज्यधन्वने ।

नमस्ते मन्त्रिणे देव कक्षाणां पतये नमः ।
ओषधीनां च पतये नमस्तेऽस्तु भुवन्तये ।। ४५

उच्चैर्घोषाय च नमः पत्तीनां पतये नमः ।
सत्वानां पतये तुभ्यं धन्वनां पतये नमः ।। ४६

सहमानाय शान्ताय शम्भवे ते मयोभुवे ।
आधीनां पतये तुभ्यं व्याधीनां पतये नमः ।। ४७

भिषजे भवरोगाणां प्रथमाय प्रमाथिने ।
ककुभाय नमस्तुभ्यं नमस्तेऽस्तु निषङ्गिणे ।। ४८

सेनानां पतये तुभ्यं वनानां पतये नमः ।
तस्कराणां च पतये नमस्तुभ्यं पिनाकिने ।। ४९

वञ्चते भक्तिहीनानां नमस्ते परिवञ्चते
स्थायूनां पतये तुभ्यं नमस्तेऽस्तु निचेरवे ।। ५०

अरण्यानां च पतये नम उष्णीषिणे विभो ।
धावते भ्रमते देव आसीनाय स्थिताय ते ।। ५१

शयानाय सुषुप्ताय जाग्रते ते नमो नमः ।
नमः सोमाय शान्ताय भीमायाथ भवाय च ।। ५२

ताम्राय अरुणायाथ शिवाय च नमोनमः ।
उग्राय शङ्करायाथ शम्भवे ते नमो नमः ।। ५३

शर्वाय सर्वरूपाय नमः सर्वगताय च ।
आवयोः पतये चैव जगतां पतये नमः ।। ५४

जिह्वाचापल्पभावेन यदावाभ्यामुदीरितम् ।
तत्क्षन्तव्यमनौपम्य कस्ते स्तौति गुणार्णवम् ।। ५५

**स्कन्द उवाच -**

एवं स्तुत्वा तदालिङ्गं पेततुः शिरसा सुरौ ।
ब्रह्मविष्णू भिया भक्त्या स्थितौ तौ प्राञ्जली मुने ।। ५६

लिङ्गोत्पत्तिस्तवं पुण्यं यः शृणोति नरः सदा ।
नोत्पद्यते हि संसारे जरारोगप्रपीडिते ।। ५७

तस्मात्सर्वप्रयत्नेन शृणुयाद् वाचयेत् तथा ।
पापकञ्चुकमुत्सृज्य शिवलोके महीयते ।। ५८

अलिङ्गलिङ्गी भगवान् महेशो
लिङ्गोत्तमाङ्गे किल सन्निविष्टः ।
शान्तः प्रशान्तः पुरुषः पुराणो
ह्यणोरणीयान् महतो महीयान् ।। ५९

।। इति श्रीशिवरहस्ये दशमांशे लिङ्गोद्भवो नाम
एकचत्वारिंशोऽध्यायः ।।



## ।। द्विचत्वारिंशोऽध्यायः ।।

**स्कन्द उवाच -**

एवं स्तुत्वा महादेवं प्रणम्य शिरसा विभुम् ।
ब्रह्मविष्णू तदा विप्र भक्त्या परमया युतौ ।। १

लिङ्गमध्ये परं लिङ्गं स्थितं प्रादेशसंमितम् ।
समाधिस्तोत्रसम्पन्नौ दृष्टवन्तौ शिवात्मकम् ।। २

नैव तत्काञ्चनं रूप्यं न रत्नस्फटिकोद्भवम् ।
ज्योतिर्मात्रं स्थितं शान्तं केवलं तच्छिवात्मकम् ।। ३

तयोस्तुष्टो महादेवः प्रादाद्वरमनुत्तमम् ।

**ईश्वरः उवाच -**

एतस्य मम लिङ्गस्य पार्श्वगौ वसतं युवाम् ।। ४

लिङ्गस्य परितोऽधस्तात् मदाज्ञापालकौ युवाम् ।
भस्मरुद्राक्षसम्पन्नौ रुद्रपञ्चाक्षरादरौ ।। ५

भवेतं मुक्तिसाम्राज्यं लभेयाथां मदाज्ञया ।
इत्युक्त्वा सहसा देवस्तस्मिन् लिङ्गे तिरोदधे ।। ६

तदाप्रभृति ब्रह्माद्या विष्णुश्चापि सुरोत्तमः ।
लिङ्गवेद्यां लिङ्गपीठे मुने ह्यभवतां सदा ।। ७

तल्लिङ्गसदृशं लिङ्गं प्रतिष्ठाप्य सुरासुराः ।
गणा महर्षयः सिद्धाः पूजयन्ति विमुक्तये ।। ८

रत्नस्फटिकधातुभ्यो मृत्सैकतसमुद्भवम् ।
कृत्वा लिङ्गाकृतिं सर्वे पूजयन्ति सुरोत्तमाः ।। ९

भस्मरुद्राक्षसम्पन्ना रुद्रपञ्चाक्षरादराः ।
पञ्चामृतैर्बिल्वपत्रैर्धूपदीपनिवेदनैः ।। १०

प्रदक्षिणनमस्कारस्तोत्रनर्तनकैस्तदा ।
प्रातर्मध्याह्नसायाह्ने प्रदोषेऽपूजयन् सुराः ।। ११

तेषां लिङ्गार्चनादेव पदप्राप्तिरभून्मुने ।
परं शुद्धं निर्गुणं तल्लिङ्गमद्भुतमैश्वरम् ।। १२

यदाद्यमैश्वरं तेजस्तल्लिङ्गमिति कथ्यते ।
कल्पान्ते संस्थिता लोकाः लिङ्गे तस्मिन् चराचराः ।।१३

दक्षिणे लीयते ब्रह्मा वामतस्तु जनार्दनः ।
हृदये चैव गायत्री छन्दांस्यन्यानि पार्वती ।। १४

*मूर्ध्नि लीयन्ति(?) वै वेदा सषङ्गपदक्रमाः ।
जठरे लीयते सर्वं जगत्स्थावरजङ्गमम् ।। १५

उत्पद्यते पुनस्तस्माद् ब्रह्मादिसचराचरम् ।
आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका । १६

आलयं सर्वभूतानां लयनाल्लिङ्गमुच्यते ।
तस्माल्लिङ्गं प्रतिष्ठाप्यं सर्वदेवोद्भवोद्भवम् ।। १७

---

* मूर्ध्नि वेदा लयं यान्ति सषडङ्गपदक्रमाः ।

स्थापितं तेन सर्वं स्याज्जगत्सर्वं चराचरम् ।
तत्पूजया पूजितं हि जगत्सर्वं न संशयः ।। १८

पूजयन्ति महादेवं ब्रह्मविष्णुमहेश्वराः ।
पूर्वं लिङ्गं समभ्यर्च्य सृष्टिस्थित्यन्तकारिणः ।। १९

ब्रह्मा शिलामयं लिङ्गं भक्त्या पूजयते सदा ।
गन्धपुष्पादिभिर्नित्यं त्रिकालं बिल्वपल्लवैः ।। २०

तस्य सम्पूजनाप्राप्तं तेन ब्रह्मत्वमुत्तमम् ।
ससर्ज जगदेवं हि ससुरासुरमानुषम् ।। २१

इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा ।
विष्णुत्वं तेन सम्प्राप्य पालको जगताभभूत् ।। २२

हीरसारमयं लिङ्गं रुद्रः पूजयते सदा ।
तेन रुद्रत्वमासाद्य जगन्नाशकरोऽभवत् ।। २३

शक्रोऽपि देवदेवस्य पद्मरागमयं शुभम् ।
नित्यमभ्यर्चयन्भक्त्या तेन शक्रत्वमाप्तवान् ।। २४

लिङ्गं हेममयं कान्तं धनदोऽर्चयते सदा ।
तेनासौ धनदो देवो धनदत्वमवाप्तवान् ।। २५

विश्वेदेवा महात्मानो रौप्यं लिङ्गं समार्चयन् ।
विश्वेदेवत्वमासाद्य मोदन्ते शक्रलोकगाः २६

वायुः पूजयन्ते लिङ्गं नित्यं पैत्तलसम्भवम् ।
वायुत्वं [1]तेन सम्प्राप्य(प्तं) अप्रमेयमनुत्तमम् ।। २७

वसवः कांस्यजं लिङ्गं पूजन्ति विधानतः ।
वसुत्वं तेन संप्राप्य मोदन्ते सुखिनः सदा ।। २८

अश्विनौ पार्थिवं लिङ्गं पूजयन्तौ भिषग्वरौ ।
तेन तावश्विनौ देवौ देवतानां भिषग्वरौ ।। २९

स्फाटिकं निर्मलं लिङ्गं वरुणोऽर्चयते सदा ।
तेनैव रुणत्वं च प्राप्तं तत्र बलान्वितम् ।। ३०

लिङ्गमन्नमयं नित्यमग्निः पूजयते सदा ।
अग्नित्वं[2] प्रप्तवांस्तेन तेजोरूपसमन्वितम् ।। ३१

ताम्रलिङ्गं सदाकालं भक्त्या देवो दिवाकरः ।
त्रिकालं [3]पूजत्येव तेन सूर्यत्वमाप्तवान् ।। ३२

मुक्ताफलमयं लिङ्गं सोमः पूजयते सदा ।
तेन सोमोऽपि [4]संप्राप्य सुधारश्मित्वमाप्तवान् ।। ३३

शालिपि [5]तृमयं लिङ्गं गृह्यः सम्पूजयत्यपि ।
नवनीतमयं लिङ्गं [6]ऋभवः पूजयन्त्यपि ।। ३४

---

1. तथा पूजनेनेत्यर्थः।
2. अग्नित्वंप्राप्तममुनेति कथनं सङ्गतं स्यात् ।
3. पूजयन्नेव । 4. दुष्प्रापम् ।
5. शालिपिण्डमयं लिङ्गं ग्रहाः सम्पूजयन्त्यपि ।
6. ऋतवः ।

घनीभूताज्यलिङ्गानि नक्षत्राण्यर्चयन्ति हि ।
कर्पूरखण्डजं लिङ्गं नागाः सम्पूजयन्ति हि ।। ३५

प्रवालकमयं लिङ्गं मरुतः पूजयन्ति हि ।
आदित्याः पूजयन्त्येव गोमेदं लिङ्गमुत्तमम् ।। ३६

पुष्परागमयं लिङ्गं रुद्राः सम्पूजयन्त्यपि ।
वैदूर्यकमयं लिङ्गं निर्ऋतिः पूजयेत्सदा ।। ३७

यमः पूजयते नित्यं लिङ्गमाय(स) निर्मितम् ।
ईशानः पूजयत्येव लिङ्गं मरकतोद्भवम् ।। ३८

नित्यं दारुमयं लिङ्गं गुह्यकाः पूजयन्त्यपि ।
सदा सीसमयं लिङ्गं नागाः सम्पूजयन्ति हि ।। ३९

असुराः पूजयन्त्येव लिङ्गं तगरसम्भवम् ।
तेन जन्ये बलोपेता भवन्ति नियतं मुने ।। ४०

गजदन्तमयं लिङ्गं राक्षसाः पूजयन्त्यपि ।
गन्धर्वाः कुङ्कुमं लिङ्गं भक्त्या सम्पूजयन्ति हि ।। ४१

गन्धलिङ्गं पूजयन्ति नियतं चाप्सरोवराः ।
भस्मलिङ्गं हि पितरः पूजयन्ति सदा मुने ।। ४२

हरिद्रानिर्मितं लिङ्गं मातरः पूजयन्ति हि ।
अस्थिनिर्मितं लिङ्गं हि पिशाचाः पूजयन्ति हि।। ४३

एवं देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
पूजयन्ति सदा लिङ्गे हीशानं देवनायकम् ।। ४४

सर्वो लिङ्गमयो लोको जगल्लिङ्गे प्रतिष्ठितम् ।
तस्मात्सम्पूजयेल्लिङ्गे यदीच्छेत्सिद्धिमात्मनः ।। ४५

लिङ्गे देवो महादेवः सह देव्या व्यवस्थितः ।
अनुग्रहाय लोकानां तस्माल्लिङ्गं प्रपूजयेत् ।। ४६

यो न पूजयते मोहाल्लिङ्गमीशस्य वै मुने ।
नासौ स्वर्गस्य मोक्षस्य न कदापि च भाजनम् ।। ४७

यस्तु पूजयते नित्यं लिङ्गं त्रिभुवनेशितुः ।
स स्वर्गमोक्षराज्यानां क्षिप्रं भवति भाजनम् ।। ४८

तस्मादेकमना भूत्वा यावज्जीवं प्रतिज्ञया ।
अर्चयीत(?) सदा लिङ्गे आपन्नोऽपि सदाबुधः ।। ४९

वरं प्राणपरित्यागः शिरश्छेदोऽपि वा वरः ।
न त्वनभ्यर्च्य भुञ्जीयाल्लिङ्गे देवं महेश्वरम् ।। ५०

एवं निर्वहते यस्तु शर्वलिङ्गार्चनाविधौ(धिम्) ।
मनुष्यदेहोऽपि मुने स रुद्रगणपोत्तमः ।। ५१

नास्ति लिङ्गार्चनात्पुण्यं नास्ति लिङ्गार्चनात्तपः ।
नास्ति लिङ्गार्चनाद्दानं नास्ति लिङ्गार्चनाज्जपः ।। ५२

न लिङ्गार्चनतुल्यं हि पुण्यमस्ति जगत्त्रये ।
अत्युत्तमप्रीतिकरं महेशस्य सदा मुने ।। ५३

न होमैर्नच वा दानैः प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात्प्रीतो देवदेवो महेश्वरः ।। ५४

न यज्ञैर्न व्रतैर्विप्र प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात् . . . . . . . . . ।। ५५

नाश्रमाचारधर्मैर्वा प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात् . . . . . . . . . ।। ५६

न वा तोयप्रदानैर्वा प्रीयतो भगवाञ्छिवः ।
यथा लिङ्गार्चनात् . . . . . . . . ।। ५७

न भूमण्डलदानैर्वा प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात्प्रीतो देव देवो महेश्वरः ।। ५८

न तीर्थाटनकैर्विप्र प्रीयते भगवाञ्छिवः . . . ।
यथा लिङ्गार्चनात् . . . . . . . . . ।। ५९

नध्यानैर्न जपैर्विप्र प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात् . . . . . . . . . ।। ६०

न प्राणायामनियमैः प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात् . . . . . . . . . ।। ६१

न शान्ति दान्त्यादिगुणैः प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात् . . . . . . . . . ।। ६२

न यमासनयोगैर्वा प्रीयते भगवाञ्छिवः ।
यथा लिङ्गार्चनात्प्रीतः . . . . . . . . . ।। ६३

न मौनैर्नैवकाषायवसनैर्वाजटाजिनैः ।
प्रीयते स महादेवो यथा लिङ्गार्चनात् सदा ।। ६४

नास्ति लिङ्गार्चनात्प्राप्यं पदं वा विप्रसत्तम ।
लौकैश्च दृश्यते सर्वैः श्रेष्ठमेतन्न संशयः ।। ६५

सत्यं सत्यं पुनः सत्यं उद्धृत्य भुजमुच्यते ।
इति विज्ञाय यत्नेन लिङ्गे पूज्यो महेश्वरः ।। ६६

अप्यामलकमात्रं वा कृत्वा लिङ्गं प्रपूजयेत् ।
अमन्त्रं वा समन्त्रं वा कुलकोटिंसमुद्धरेत् ।। ६७

**स्कन्द उवाच -**

लिङ्गेष्वेतेषु यस्मिन्नभिरुचिपरमो भस्मरुद्राक्षधृक् सन्
अभ्यर्च्यानुदिनं महेश्वरपदध्यानैकसन्मानसः ।
बिल्वानां च दलैः सदम्बुजसुमैर्यः कोऽपि रङ्कोऽपि वा
विप्रो वा गिरिकन्यके स हि सदा मुक्ताघसङ्घो भवेत् ।।

भवे क्षोण्यां क्षीणो वरदुरितराशिः किल शिवे
क्षणार्धमपि शङ्करं पशुपलिङ्गदत्तेक्षणः ।
अलक्षण्यं पुण्यं परिलभति(?) गण्यादिरहितं
गणश्रेष्ठो भक्त्या मम पदजपुण्येन गतिमान् ।।

।। इति श्रीशिवरहस्ये दशमांशे शिवलिङ्गार्चन-
महिमानाम द्विचत्वारिंशोऽध्यायः ।।



## ।। त्रिंचत्वारिंशोऽध्यायः ।।

**स्कन्द उवाच -**

पुनर्वक्ष्येऽद्य माहात्म्यं शिवलिङ्गार्चनस्य हि ।
नित्यनैमित्तिकं काम्यं लिङ्गपूजाविनिर्णयम् ।। १

लिङ्गभेदे फलं देव्यै देवेन कीर्तितम् ।

**देव्युवाच -**

देव देव महादेव कैलासशिखरप्रिय ।। २

तव प्रियकराणीह कानि लिङ्गानि शङ्कर ।
तेषामुत्कर्षतः शम्भो पूजां चैवाधिकारिताम् ।। ३

वद लिङ्गानि कानि स्युस्तव पूजाविधौ शिव ।

**ईश्वर उवाच -**

शृणु पद्मपलाशाक्षि गिरिजे विरजेऽमले ।। ४

नित्ये नैमित्तिके काम्ये वक्ष्ये लिङ्गान्यनुक्रमात् ।
तेषां पूजाविधिं चापि मानं लक्षणमीश्वरि ।। ५

पार्थिवात्तैजसं लिङ्गं वरिष्ठं परिकीर्तितम् ।
तैजसाद्रत्नलिङ्गानि वरिष्ठान्यर्चनाविधौ ।। ६

चराचरविभागेन लिङ्गं द्वेधा विनिर्मितम् ।
पाषाणं स्थावरं प्राहुर्बाणलिङ्गविवर्जितम् ।। ७

तत्स्थूलं स्थावरं प्राहुश्चरं तु चतुरङ्गुलम् ।
सर्वाण्यपि च लिङ्गानि स्थूलान्येव प्रशस्यते (?) ८

रत्नानि सूक्ष्मलिङ्गानि प्रशस्तानि शुभानने ।
सत्रासान्यपि लिङ्गानि शस्तानि मम पूजने ।। ९

रत्नलिङ्गेषु देवेशि फलं वक्ष्येऽनुपूर्वशः ।
आयुर्वृद्धिकरं हीरं रोगहृन्मौक्तिकोद्भवम् ।। १०

सुखकृत्पुष्यरागोत्थं वैडूर्यं शत्रुनाशकम् ।
पद्मरागं च लक्ष्मीदं इन्द्रनीलं यशःप्रदम् ।। ११

वैद्रुमं धनदं नित्यं गोमेदं पुत्रपौत्रदम् ।
लिङ्गं मारकतं पुष्टौ स्फाटिकं सर्वकामदम् ।। १२

हेमजं मुक्तिदं देवि राजतं ज्ञानदं नृणाम् ।
पूजयेत्ताम्रलिङ्गं तु पुष्टितुष्टिपशुप्रदम् ।। १३

पुत्रदं पैत्तलं लिङ्गं कांस्यं कीर्तिप्रदं शिवे ।
शत्रुमारणकामस्तु लिङ्गं लोहमयं जपेत् (यजेत् ) ।। १४

तथा सीसमयं लिङ्गमायुष्कामो यजेत्सदा ।
शिवे रसमये लिङ्गे सदा सन्निहितोऽस्म्यहम् ।। १५

तत्पूजया कोटिलिङ्गपूजा ह्यहनैव लभ्यते ।
न प्रतिष्ठादिसंस्कारस्तल्लिङ्गस्य महेश्वरि ।। १६

रत्नधातुजलिङ्गेषु शताब्दान्ते प्रतिष्ठितिः ।
प्रतिमायां चित्रपटे तथादर्शे महेश्वरि ।। १७

अयने पर्वयोर्देवि तत्र कुर्यात्प्रतिष्ठितिम् ।
पार्थिवादीनि लिङ्गानि वक्ष्यामि परमेश्वरि ।। १८

---

सत्रासानि Defective

मृद्भवं दारुजं लिङ्गं सैकतं पिष्टनिर्मितम् ।
गान्धं सौभाग्यदं विद्धि छन्नमायुर्विवर्धनम् ।। १९

पौष्पं सर्वार्थदं देवि मानदं शृङ्ग निर्मितम् ।
सेनापत्यप्रदं पुंसां नागदन्तमयं शिवे ।। २०

शालिपिष्टोद्भवं लिङ्गं पशुदं यवजं बलम् ।
गोधूमजं वातहरं मौद्गं स्त्री माषजं सुखम् (?) ।। २१

तिलकल्कोद्भवं पुण्यं सिध्यर्थमघनाशनम् ।
गौडं प्रीतिकरं पुंसां नवनीतं सुखप्रदम् ।। २२

गोमयं रोगनाशाय भस्मोत्थं पापहृच्छिवे ।
लवणं मैत्रदं देवि मूलजं शत्रुनाशनम् ।। २३

वंशाङ्कुरोत्थं वंशादिवृद्धिप्रदमनुत्तमम् ।
पुरक्षोभकरं पौरं रामठं कुष्ठनाशनम् ।। २४

अस्थिजं मारणं प्रोक्तं केशजं भयदं त्वरेः ।
कुङ्कुमं धनदं देवि हारिद्रं मङ्गलप्रदम् ।। २५

सौभाग्यदं च कर्पूरं कस्तूरीसम्भवं सुखम् ।
यावत्कामं पूजयेत्तु लिङ्गान्येतानि सुन्दरि ।। २६

विधिः पार्थिवलिङ्गस्य समासान्न तु विस्तरात् ।
मृल्लिङ्गार्चाविधिं वक्ष्ये शृणु देवि मयोदितम् ।। २७

मृदाहारणसङ्घट्टप्रतिष्ठाह्वानमीश्वरि ।
स्नपनं पूजनं चैव विसर्जनमतः परम् ।। २८

हरः सोमेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
शिवः पशुपतिश्चैव महादेव इति प्रिये ।। २९

केचित्पञ्चोपचारांस्तु पञ्चब्रह्मादिभिः शिवे ।
षडक्षरेणोपचारान् कुर्युर्देवि पृथक् पृथक् ।। ३०

प्रणवदिचतुर्थ्यन्तैर्नमोऽन्तैर्हरनामभिः ।
सर्वमन्त्रमयश्चायमोङ्काराद्यैः षडक्षरैः ।। ३१

यं यं काममभिध्यायेत्ततत्सङ्कल्प्य पूजयेत् ।
यावत्कामसमाप्तिर्हि कुर्यान्मृल्लिङ्गपूजनम् ।। ३२

ध्यानं तस्यैव विहितं पूजने परमेश्वरि ।। ३३

ध्यायेदेवं महेशं रजतगिरिवसं(चरं)चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं हि देव्या वृतममरवरैः पार्षदैस्त्वम्ब देवं
विश्वेशं विश्ववन्द्यं निखिलभयहरं भावयेत्पञ्चवक्त्रम् ।। ३४

पञ्चोपचारैः सम्पूज्य स्नानादीनि सुरेश्वरि ।
मूर्तयोऽष्टौ शिवस्यैव पूजनीयाश्च दिक्क्रमात् ।। ३५

शर्वाय क्षितिरूपाय भवाय जलमूर्तये ।
रुद्राय वह्निरूपाय वायवे चोग्रमूर्तये ।। ३६

भीमायाकाशमूर्त्ये च यजेत पशुपाय च ।
महादेवाय सोमाय सूर्यमूर्त्यात्मनेति दिक् ।। ३७

स्तुत्वा ध्यात्वा नमस्कृत्य पार्थिवं तद्विसर्जयेत् ।
एवं पापहरं प्रोक्तं द्विलिङ्गं सर्वसिद्धिदम् ।। ३८

त्रिलिङ्गं पूजयेन्नित्यं सर्वदं पार्थिवं शिवे ।
लिङ्गानामयुतं पूज्यं महाराजभयापहम् ।। ३९

सहस्रमेकं लिङ्गानां पूज्यं रोगहरं शिवे ।
सहस्राणि तथा पञ्च पुत्रदं पार्थिवार्चनम् ।। ४०

कारागृहविमुक्त्यर्थं शतमष्टोत्तरं यजेत् ।
लिङ्गानां पार्थिवानां तु लक्षं स्यान्मोक्षसिद्धिदम् ।। ४१

कोटिपार्थिवलिङ्गानां मुक्तिदं स्यान्न संसयः ।
सर्वपार्थिवलिङ्गानां नित्यकाम्येष्वयं विधिः ।। ४२

मृल्लिङ्गं पार्थिवं लक्षं भुक्तिमुक्तिफलप्रदम् ।
देशं कालं बलं ज्ञात्वा फलं चैव विशेषतः ।। ४३

विद्यार्थी लिङ्गसाहस्रं धनार्थी च तदर्धकम् ।
पुत्रार्थीचार्धसाहस्रं कन्यार्थी च शतत्रयम् ।। ४४

विद्वान् लिङ्गायुतं कुर्यात्सर्वपापहरं परम् ।
सुहृत्कामः सहस्रं तु धनार्थी च सहस्रकम् ।। ४५

मरणार्थी सप्तशतं मोहनार्थी शताष्टकम् ।
उच्चाटनार्थी साहस्रं वश्यार्थी द्विसहस्रकम् ।। ४६

दारिद्र्यनाशनार्थं तु पञ्चसाहस्रमीरितम् ।
पार्थिवेन तु लिङ्गेन बहवः सिद्धिमागताः ।। ४७

तत्रापि पार्थिवं लिङ्गं क्षिप्रसिद्धिप्रदं शिवे ।
कृते रत्नमयं लिङ्गं त्रेतायां हेमसम्भवम् ।। ४८

द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे ।
रत्नधातुस्फटिकजपार्थिवे नैव चण्डभाक् ।। ४९

नैवेद्यं चैव निर्माल्यं ग्राह्यमेव न संशयः ।। ५०

लिङ्गान्यमूनि किल शैलसुतेऽमलानि
तुङ्गानि पार्थिवसुधातुजतैजसानि ।
सम्पूजितानि नियमेन फलेच्छुभिर्वा
निष्काममुक्तिपरमाणि सदैव गौरि ।। ५१

।। इति श्रीशिवरहस्ये दशमांशे लिङ्गपूजाकथनं नाम
त्रिचत्वारिंशोऽध्यायः ।।



## ।। चतुश्चत्वारिंशोऽध्यायः ।।

**स्कन्द उवाच -**

अथ ते सम्प्रवक्ष्यामि शिवपूजाविधिक्रमम् ।
निगमागम भेदेन पूजा प्रोक्ता मनीषिभिः ।। १

पूजनं शङ्करस्यैव बहुधा परिकीर्तितम् ।
श्रुतिस्मृति समा(दा) चारतन्त्रागमविभेदतः ।। २

बृहज्जाबालकाः प्रोचुः केवलं लिङ्गपूजनम् ।
पञ्चायतनपूजा हि स्मृतिप्रोक्ता मुनीश्वर ।। ३

तन्त्रागमोक्तपूजा हि शिवदीक्षावतां शिवे ।
निगमागमसंयुक्ता पूजेयं कथ्यते तव ।। ४

शिवप्रधानपूजेयं शिवलिङ्गैकपूजनम् ।
केवलं ते समासेन सपञ्चाक्षरसंयुतम् ।। ५

प्रवक्ष्यामि यथा देव्यै प्रोक्तं विश्वेश्वरेण हि ।
कैलासशिखरासीनं देवं कामेश्वरं विभुम् ।। ६

ब्रह्मोपेन्द्रमहेन्द्राद्यैर्गणैर्विद्याधरैस्तथा ।
दानवैर्मुनिभिः सिद्धैर्यक्षरक्षोगणाधिपैः ।। ७

हेरम्बस्कन्दपूर्वादिगणैर्भक्त्या सुसेवितम् ।
अक्षक्रीडारसास्वादलालसं परमेश्वरम् ।। ८

प्रणम्य नन्दी प्रोवाच क्रीडन्तं परमेश्वरम् ।
क्रीडतो भुवनेशस्य जगदम्बिकया सह ।। ९

अक्षपाताधिकारे तु पक्षपातधियोज्झितः ।
क्रीडतः क्रमयोगेन जितं देवेन शम्भुता ।। १०

अक्षप्रपाताद्देवेन प्रोक्तं नन्दिन् जितं मया ।
तदा सत्याभियोगेन तुष्टोऽहं त्वयि भक्तितः ।। ११

वरो मे व्रियतां वत्स यस्ते मनसि वर्तते ।
ददामि तं न सन्देहः प्रीतेन मनसा तव ।। १२

**नन्दीश्वरः उवाच -**

तुष्टोऽसि यदि देवेश जगतामीश्वर प्रभो ।
वद पूजाविधानं ते (तान्)शैवान् मन्त्रान् सुदुर्लभान् ।। १३

चक्राङ्गन्याससहितान् पूजाकर्मसमन्वितान् ।

**शिव उवाच -**

कथयामि महाभाग त्रैलोक्येष्वपि दुर्लभान् ।। १४

शैवान् सर्वमनुश्रेष्ठान् सर्वमन्त्रेषु गोपितान् ।
भक्तोऽसीति न मे किञ्चिदवाच्यं त्वयि सुव्रत ।। १५

मूलमन्त्राङ्गविन्यास पूजाकर्मसमन्वितान् ।
दीक्षाभिषेकसहितानधिकारसमन्वितान् ।। १६

उद्धारक्रमयोगेन सर्वकामफलप्रदान् ।
सुसमे भूप्रदेशे तु गोमयेनोपलेपिते ।। १७

पुष्पप्रकरशोभाढ्ये गन्धधूपतरङ्गिते ।
विलिखेन्मातृकास्तत्र वर्गाष्टकविभेदतः ।। १८

स्वरैः षोडशभिर्वर्गैः प्रथमः परिकीर्तितः ।
पञ्चपञ्चाक्षरांश्चान्यौ द्वावन्यौ चतुरक्षरौ ।। १९

वर्गाष्टकं भवेदेवं ततो मन्त्रान् समुद्धरेत् ।
*पञ्चमस्यतु वर्गस्य पञ्चमं प्रथमं भवेत् ।। २०

षष्ठवर्गान्तिमोवर्णः प्रथमान्त्यसमान्वितः ।
द्वितीयं वर्णमाख्यातमष्टमस्याद्यमक्षरम् ।। २१

प्रथमस्य तृतीयार्णसमेतं तत्तृतीयकम् ।
चतुर्थं सप्तमस्यान्त्यं द्वितीयाद्यसमन्वितम् ।। २२

चतुर्थवर्णं मन्त्रस्य सप्तमाद्यं तु पञ्चमम् ।
एव पञ्चाक्षरो मन्त्रः प्रणवाद्यः षडक्षरः ।। २३

यत्साधनात्तु मनुजाः शिवसायुज्यमाप्नुयुः ।
प्रणवस्तु परब्रह्मबोधकः समुदीरितः ।। २४

पञ्चाक्षरमयानि स्युः पञ्चभूतानि सुव्रत ।
भूतात्मकं जगदिदं तेनास्य जगदात्मता ।। २५

---

* पञ्चमवर्गस्य तवर्गस्य, पञ्चमं "न" प्रथमाक्षरम् । षष्ठवर्गान्तिमो वर्णः पवर्गस्यान्तिमवर्णः "मकार" प्रथमान्त्यवर्णः विसर्गः "नमः" इति फलितम् । अष्टमस्य आद्यमक्षरं शकारः प्रथमवर्गस्य स्वरवर्गस्य तृतीयार्णः इकारः तद्युक्तः 'शि' इति वर्णः सप्तमस्यान्त्यवर्णः वकारः स च द्विर्तीयाद्यसमन्वितः आद्यवर्गस्य द्वितीयाक्षरेण आकारेण- समन्वितः यदि "वा" इति भवति । इदं च मन्त्रस्य चतुर्थाक्षरं भवति । सप्तमाद्यं सप्तमवर्गस्य आद्यमक्षरं "य" इति पञ्चमं, मन्त्रस्यपञ्चमाक्षरं भवति । एवं च "नमः शिवाय" इति सिध्यति ।

ऋषिरुक्तो वामदेवः पङ्क्तिश्छन्द उदाहृतम् ।
सदाशिवो देवतास्य मन्त्रस्य परिकीर्तिता ।। २६

षडङ्गानि मनोर्वर्णैर्जातियुक्तानि कल्पयेत् ।
तत्पुरुषाघोरसद्योवामदेवेशसंज्ञिताः ।। २७

मूलवर्णादिकान्न्यस्य त्रिषु स्थानेष्वतन्द्रितः ।
तर्जनीमध्यमान्त्यानामाङ्गुष्ठेन तथा परः ।। २८

*आस्यहृत्पादगुह्यादिमूर्ध्नि हस्तेषु चापरः ।
प्राग्याम्यवारुणोदीच्यमध्यवक्त्रेषु पञ्चसु ।। २९

ततः षडङ्गं विन्यस्येद्वक्ष्यमाणं यथाविधि ।
सर्वज्ञो नित्यतृप्तश्च बोधान्तोऽनादिरेव च ।। ३०

स्वतन्त्रशक्तिश्चालुप्त शक्तिश्चानन्तशक्तियुक् ।
मूलमन्त्रेण पूर्वैश्च धाम्ने शब्दान्तगैः क्रमात् ।। ३१

षडङ्गानि मनोरस्य जातियुक्तानि मन्त्रवित् ।
कुर्वीत गोलकन्यासं रक्षायै नन्दिकेश्वर ।। ३२

हृदि वक्त्रांसयोरूर्वोः कचे नाभौ द्विपार्श्वयोः ।
पृष्ठे हृदि ततो मूर्ध्नि वदने नेत्रयोर्नसोः ।। ३३

दोःसन्धिषु नखाग्रेषु विन्यसेत्तदनन्तरम् ।
शिरोवदनहृत्कुक्षौ ऊर्वोः पादद्वये पुनः ।। ३४

हृदि वक्त्राम्बुजे कम्ठे मृगाभयकरेष्वथ ।
वक्त्रांसहृत्सु पादोरु जठरेषु न्यसेदथ ।। ३५

---

* आस्यहृत्पादगुह्यादौ मूर्ध्नि हस्तेषु चापरः ।

मूलमन्त्रस्य षड्वर्णान् यथावद्देशिकोत्तमः ।
मूर्ध्नि पादोदराङ्गेषु हृदये तां पुनर्न्यसेत् ।। ३६

पश्चादनेन मन्त्रेण कुर्यात्स्वं व्यापकं सुधीः ।
गोक्षीरफेनधवलं रजताद्रिसमप्रभम् ।। ३७

चारुचन्द्रकलाराजज्जटामकुटमण्डितम् ।
पञ्चवक्त्रधरं शंभुं शितिकण्ठं त्रिलोचनम् ।। ३८

शार्दूलचर्मवसनं नानाभरणभूषितम् ।
दक्षोर्ध्वहस्ते परशुं तदधस्ताद्वरं करे ।। ३९

वामोर्ध्वहस्ते हरितं दधानमभयं करे ।
सुप्रसन्नमुखाम्भोजं निविष्टं पद्मविष्टरे ।। ४०

विष्णुब्रह्ममहेन्द्राद्यैः स्तुतं भक्त्या शिवायुतम् ।
विश्वाद्यं विश्वपुषं भावयेद् हृदि शङ्करम् ।। ४१

इति ध्यात्वा गणश्रेष्ठं मानसैरर्चयेच्छिवम् ।
उपचारैः षोडशभिर्बाह्यपीठे समर्चयेत् ।। ४२

पद्मं वसुदलं कृत्वा कर्णिकाकेसरोज्जवलम् ।
बहिरष्टदलद्वन्द्वं चतुरस्त्र समन्वितम् ।। ४३

चतुर्द्वारसमायुक्ते मण्डलेऽस्मिन् प्रपूजयेत् ।
एवं पीठं समभ्यर्च्य मूर्तिं मूलेन हृद्गताम् ।। ४४

आवाह्य लिङ्गे मूलेन सपुष्पेण गणोत्तम ।
पाद्यार्घ्याचमनैर्नीरैः सुपुष्पैर्वासितैस्तदा(था) ।। ४५

पञ्चगन्धैःपञ्चफलैर्गवां पञ्चामृतैरपि ।
गन्धपुष्पाम्बुरत्नौधैरुत्तानैरुत्तराग्रकैः । ४६

अन्यपुष्पैर्यथालाभं मन्त्रैरेतैर्गणोत्तम ।
हरो महेश्वरः शम्भुरुग्रो भीमः शिवस्तथा ।। ४७

संसारवैद्यः सर्वज्ञ इत्याद्यैश्च नमोऽन्तकैः ।
धूपं दीपं च नैवेद्यं ताम्बूलं च ततो गण ।। ४८

दद्यान्मूलेन देवाय प्रणामप्रक्रमैस्तथा ।
नीराजनं नर्तनं च पुनर्मन्त्रजपस्तथा ।। ४९

आवाहितस्य हृदये पुनरुद्वासनं तथा ।
सङ्ग्रहाद्विधिरेवायं विस्तरे चेदथोत्तरे ।। ५०

एवं भक्तगणोत्तमोऽत्र हि सदा लिङ्गं त्रिकालं यजन्
कालं चैकमथ द्वितीयमगजे रुद्रो भवेन्मैनके ।
तेनानुत्तमभोगसम्पदखिला प्राप्येत भूमण्डले
लिङ्गाराधन साधनैकमनसा तुष्टो विशिष्टो भवेत् ।। ५१

।। इति श्रीशिवरहस्ये दशमांशे शिवपूजाविधानं नाम
चतुश्चत्वारिंशोऽध्यायः ।।



## ।। पञ्चचत्वारिंशोऽध्यायः ।।

ईश्वरः उवाच -

विस्तरेण प्रवक्ष्यामि शिवलिङ्गार्चनक्रमम् ।
षडक्षरेण न्यासादि कृत्वा पूर्वोक्तमार्गतः ।। १

लघुन्यासेन वा सम्यक् पञ्चाङ्गेन यथा विधि ।
पीठान्तं पूजनं कृत्वा पूजको भस्मभूषितः ।। २

भूशुद्धिं भूतशुद्धिं च कृत्वा वाऽथ स्वशक्तितः ।
स्थावरे चेद् द्वारचण्डगणेशस्कन्दपूर्वकान् ।। ३

अस्त्रेण दिग्बन्धनादि कृत्वा हुत्वा च पावके ।
भवाद्यैर्नामभिश्चावाहाहुतीः समिधश्चरुम् ।। ४

स्वसूत्रोक्तेन मार्गेण स्थाप्य वह्निं पृथग्यजेत् ।
पञ्चत्वक्पल्लवोपेतमव्रणं कुम्भमेव हि ।। ५

सम्पूर्य शुद्धैरम्भोभिरापूर्य विधिवत्तदा ।
तण्डुलेषु विधायैवं पुण्याहं वाचयेत्ततः ।। ६

ततो वै प्रोक्ष्य मूलेन सास्त्रेण प्रणवेन हि ।
प्राक् पदद्वारपालांश्च पूज्य धूपादिभिः क्रमात् ।। ७

अन्तर्गृहं प्रविश्यैवं लिङ्गं सम्पूजयेत्ततः ।
समुत्तार्य यदावासो निर्माल्यं तद्बहिस्त्यजेत् ।। ८

चण्डेशायेति तदनु ओंनमेत्यादिपूर्वकम् (?) ।
तिलतैलैः पञ्चगव्यैस्तथा पञ्चफलैरपि ।। ९

शालिपिष्टैस्तथा कल्कैर्गन्धपुष्पोदकैरपि ।
बहिर्जप्तताम्रकुम्भरुद्रसूक्तोदकैरपि ।। १०

अभिषिञ्चेच्च लिङ्गे हि यथाविभवमेव हि ।
स्नानकाले प्रकुर्वीत वाद्यारावं मनोहरम् ।। ११

ततः शङ्खोदकेनेशं अभिषिञ्चेच्च मूलतः ।
वासोऽभिवेष्टयित्वेशं (?) गन्धैर्लिप्येत लिङ्गकम् ।। १२

त्रिपुण्ड्रं दापयेल्लिङ्गे घृतदीपावलीमपि ।
बिल्वपत्रैस्तथोत्तानैरुत्तराग्रैरथार्चयेत् ।। १३

शताष्टनामसङ्ख्याभिः कुसुमैर्मालिकादिभिः ।
धूपं दीपं च नैवेद्यं ताम्बूलमुपचारकम् ।। १४

छत्रचामरमायूरव्यजनादर्शकैरपि ।
प्रणवाद्येन मन्त्रेण तल्लिङ्गे चापि भक्तितः ।। १५

नीराजनं नृत्तगीतं वाद्यं नत्वा प्रदक्षिणाः ।
स्तोत्रं चेति समासेन स्थावरेषु विधिः शिवे ।। १६

ततो देवीं गणेशं च स्कन्दचण्डेश्वरादिकाः ।
तत्तन्मन्त्रेण मेधावी *तल्लिङ्गैश्च नमोऽन्तकैः ।। १७

उपचारैश्च शिववत्पूज्यास्तेऽमी गणेश्वराः ।
मूलबेरं तु सम्पूज्यं प्रोक्षणं धातुबेरके ।। १८

---

*तल्लिङ्गैः मन्त्रैः ।

उपचारैर्यथापूर्वं कुर्यान्नीराजनं पृथक् ।
देव्यै पूर्वं गणेशं च स्कन्दं चण्डेश्वरं वृषम् ।। १९

नृत्तेशं दक्षिणामूर्तिं सोमास्कन्दं समाचरेत् ।
शिवस्य सर्पिषा प्रोक्तं स्नानं वापि स्थिरे चरे ।। २०

तावता मधुना चैव दध्ना क्षीरेण तावता ।
सहस्रधाराशतकं शङ्खैर्गोशृङ्गजैर्जलैः ।। २१

पञ्चविंशतिमूर्तीनामेवं पूजा त्रिमूर्तिषु ।
भैरवस्यान्तिमा पूजा कार्या रात्रौ दिवापि हि ।। २२

नित्यादपि द्विगुणितां कुर्यात्पूजां तथोत्सवे ।
मासर्क्षायनयोरेवं ग्रहणे सोमसूर्ययोः ।। २३

पर्वण्यपि विशेषेण चरेषूद्वर्तनं चरेत् ।
पञ्चामृतानां स्नपने चैवमभ्यङ्गके शिवे ।। २४

स्नानं फलशतं ज्ञेयमभ्यङ्गे पञ्चविंशतिः ।
फलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितम् ।। २५

प्रतिष्ठासु महास्नानं स्थिरे चाभ्यङ्गकं शिवे ।
स्नापयीत विधानेन प्रतिष्ठासु च पर्वणि ।। २६

प्रदोषे सोमवारे च चतुर्दश्यष्टमीषु च ।
पूजैवं द्विगुणा कार्या शिवरात्र्यां तु यामसु ।। २७

षट्त्रिकालेष्वेवमेवं षट्काले काल उच्यते ।
प्रातः सङ्गवमध्याह्नः प्रदोषोऽथ निशीथिनी ।। २८

अरुणोदयकालश्च षट्कालः स्थावरार्चने ।
प्रातर्मध्याह्नसायाह्ने पूजा स्याच्चरलिङ्के ।। २९

वर्जयित्वा निशीथं च माघकृष्णचतुर्दशीम् ।
प्रतिष्ठासु त्रिगुणितं स्थावरे पूजनं भवेत् ।। ३०

दैवे चार्षे स्वयंभूते भिन्ने भग्नेऽथ सन्धिते ।
पूजां माण्डलिकीं कुर्यात् त्रिगुणं होमतर्पणम् ।। ३१

द्विजानां भोजनं चैव चतुर्गुणितमाचरेत् ।
स्थावरे जङ्गमे चैव एष सामान्यतो विधिः ।। ३२

चरे वा स्थावरे वापि मूर्तीनां पूजनं भवेत् ।
सर्वोपचारैराराध्य मध्ये वत्स ततोऽर्चयेत् ।। ३३

प्रथमेऽष्टदले मूर्तीः यजेत्तत्पुरुषादिकाः ।
दिक्पत्रेषु गणश्रेष्ठानीशं मध्ये समर्चयेत् ।। ३४

पीतासितश्वेतरक्तपत्रभाश्चतुराननाः ।
वराभयमृगांश्चैव परशुं बिभ्रतीः करैः ।। ३५

कोणपत्रेषु मध्ये च निवृत्याद्याः कला यजेत् ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।। ३६

शान्त्यतीता कलाः प्रोक्तास्तेजोरूपाः क्रमात्तथा ।
आग्नेय्यां पूर्व वायव्यां मध्ये दिक्षु च पूजयेत् ।।३७

केसरेषु षडङ्गानि द्वितीयेऽष्टदले पुनः ।
अनेनाद्यन्तमनुना यजेद्देवान् प्रदक्षिणम् ।। ३८

अनन्तसूक्ष्मनामानि शिवोत्तममनन्तरम् ।
एकनेत्रं चैकरुद्रं त्रिमूर्तिं तदनन्तरम् ।। ३९

शितिकण्ठं गणश्रेष्ठं शिखण्डिनमिति क्रमात् ।
नीलपीतसितारक्तकृष्णधूसरसाञ्जनाः ।। ४०

किरीटार्पितबालेन्दून् पद्मस्थान् नगभूषणान् ।
त्रिणेत्रान् शूलवज्रेषु चापहस्तान् मनोहरान् ।। ४१

ततोऽर्चयेद्गणश्रेष्ठान् तृतीयेऽष्टदले पुनः ।
उमा चण्डेश्वरो नन्दी महाकालो गणेश्वरः ।। ४२

वृषभो भृङ्गी च रिटिरित्येवं तान् च यथाक्रमम् ।
उत्तरं दलमारभ्य पीतनीलारुणासितान् ।। ४३

उक्तान् हि वर्णतः श्वेतपाटलान् क्रमतः सुधीः ।
चतुरश्रे गणश्रेष्ठ पूर्वदिक्क्रमतो यजेत् ।। ४४

इन्द्रं सुराधिपं पीतं वज्रहस्तं सवाहनम् ।
अग्निं तेजोऽधिपं रक्तं शक्तिहस्तं सुभूषितम् ।। ४५

यमं प्रेताधिपं कृष्णं दण्डहस्तं समर्चयेत् ।
रक्षोऽधिपं निर्ऋतिं खड्गहस्तं बलोन्नतम् ।। ४६

पाशहस्तं सुशुभ्राङ्गं वरुणं यादसां पतिम् ।
वायुं प्राणाधिपं धूम्रं अङ्कुशाढ्यकरं यजेत् ।। ४७

यक्षाधिपं कुबेरं च शुक्लवर्णं गदाधरम् ।
विद्याधिपं तथेशानम् श्वेतं शूलकरं यजेत् ।। ४८

नागाधिपं तथानन्तं गौरं च श्रीगलं यजेत् ।
लोकाधिपं विधातारं रक्तपद्मासनं यजेत् ।। ४९

अङ्कुशं रक्तवर्णं च शुक्लवर्णां गदां यजेत् ।
त्रिशूलं नीलवर्णं च यजेदग्रे समाहितः ।। ५८

रथाङ्गं कुरुविन्दाभं पद्मं रक्तं समर्चयेत् ।
लोकपालायुधान्येवं कथितानि तवानघ ।। ५१

य एवं पूजयेद्देवं स सद्यः शिवतां व्रजेत् ।
यद्यशक्तश्चरे वापि स्थावरे वा गणेश्वर ।। ५२

केवलं पञ्चमनुभिः पाद्यार्घ्याचमनीयकम् ।
मूलेन त्र्यम्बकेनापि शिवमावाह्य पूजयेत् ।। ५३

शताष्टोत्तरसङ्ख्याकं जपेत्तत्र षडक्षरम् ।
भवायेति तथैवाष्टनामभिः पूजयेत्ततः ।। ५४

मूलेन धूपदीपादिनैवेद्यं च विसर्जनम् ।
स्त्रीशूद्राणां नमोऽन्तेन पूजनं परिकीर्तितम् ।। ५५

प्रणवाद्यन्तवर्णेन यतिः पञ्चाक्षरेण हि ।
पूजयेल्लिङ्गमीशानमन्येषां च यथाविधि ।। ५६

नास्ति लिङ्गार्चनसमं तपस्त्रिभुवनेश्वरि ।
यद्याचरत्येवमेवमाप्राणान्तं गणोत्तम ।। ५७

स एव रुद्रगणपः स रुद्रः स च शाम्भवः ।
तदेकस्मिन् दिने त्यक्त्वा पञ्चाब्दं नरकं व्रजेत् ।।
यद्येकस्मिन् दिने त्यक्ता पञ्चाब्दं नरकं व्रजेत् ।. ५८

**स्कन्द उवाच -**

एवं स्थिराचारपरो हि लिङ्गं
संपूजयन् भुवि मुने वरभोगभाक् स्यात् ।
दैवीं तथा स च गतिं लभतेऽनुरूपां
मुक्तोऽथ भक्तिपरमो मयि सत्यमेव ।। ५९

।। इति श्रीशिवरहस्ये दशमांशे चरस्थावरलिङ्गार्चा नाम
पञ्चचत्वारिंशोऽध्यायः ।।



## ।। षट्चत्वारिंशोऽध्यायः ।।

**स्कन्द उवाच -**

अतः परं प्रवक्ष्यामि नित्यनैमित्तिके फलम् ।
कालं लिङ्गविशेषं च ब्रह्मक्षत्रविशां तथा ।। १

आश्रमाणां च सर्वेषां एष लिङ्गार्चने विधिः ।
नित्यलिङ्गार्चन शस्तं धातुस्फटिकसम्भवम् ।। २

बाणलिङ्गं मारकतं रसेन्द्रककृतं शिवे ।
पार्थिवं कामदं ज्ञेयं सर्वकर्मसु शोभने ।। ३

न यस्य शिवलिङ्गार्चा गृहे भवति शङ्करि ।
स नित्यसूतकी ज्ञेयो ब्राह्मणो वान्त्यजोऽपि वा ।। ४

बाणलिङ्गं न यस्यास्ति गृहे बिल्वादिपूजितम् ।
तद्गृहे जलमल्पं वा न पेयं सर्वथा बुधैः ।। ५

एककालं द्विकालं वा त्रिकालं नित्यमेव वा ।
येऽर्चयन्त्येव नियतं मम लिङ्गं महेश्वरि ।। ६

ते वै गणेन्द्रा विज्ञेया मम तोषप्रदाः शिवे ।
प्रदोषेषु विशेषेण यः पूजयति शङ्करम् ।। ७

स महापातकैर्मुक्तो भविष्यति न संशयः ।
ऋणदारिद्र्यनाशाय प्रदोषे पूजयेच्छिवम् ।। ८

घृताभिषेकं कुर्वीत कुर्यात्पलदशेन(दशपलेन) वै ।
उत्पलैर्बिल्वपत्रैश्च पूजनीयो महेश्वरः ।। ९

सोमवारेऽर्चने शम्भोर्नक्तमायुष्यवर्धनम् ।
क्षीरेण स्नापयेद्देवं कपिलासम्भवेन वा ।। १०

कमलैर्बिल्वपत्रैश्च पूजनीयो भवो मुने ।
चतुर्दश्यां निशीयिन्यामपामार्गैश्च बिल्वकैः ।। ११

पूजयेल्लिङ्गमेकाग्रो दध्ना संस्नापयेच्छुचिः ।
कालाष्टम्यां कालकालमर्चयेन्नियतव्रतः ।। १२

मधुना स्नाप्य देवेशं बिल्वपत्रैः प्रपूजयेत् ।
बोधायनोक्तविधिना सर्वनक्तव्रतं शिवे ।। १३

तत्रावाहनपूजां च प्रवक्ष्यामि शिवे तव ।
यथाभिरुचिरे(ते) लिङ्गे धातुजे स्फाटिकेऽपि वा ।। १४

बाणे (णं) रसेन्द्रकलिते(तं) तथा मरकतोद्भवम् ।
स्थाप्य पीठे रङ्गवल्लीमण्डिते चोपलेपिते ।। १५

भूमौ नक्तव्रतो मौनी स्नात्वा भस्मत्रिपुण्ड्रधृक् ।
रुद्राक्षमालाभरणो जपेत्पञ्चाक्षरं मनुम् ।। १६

करे करतले चैव हृदये च न्यसेद् बुधः ।
ध्यायेत्तत्र महादेवं पूजादौ जपकर्मणि ।। १७

मूले कल्पद्रुमस्य द्रुतकनकनिभं हेमसिह्मासनस्थं
वामाङ्कारूढगौरीनिबिडकुचभराभोगगाढोपगूढम् ।
सर्वालङ्कारदीप्तं वरपरशुमृगाभीतिहस्तं त्रिणेत्रम्
वन्दे चन्द्रार्धचूडं गुहगणपशिवाश्लिष्टपार्श्वं महेशम् ।।

ध्यात्वैवं मूलमन्त्रं तु जपेदष्टोत्तरं शतम् ।
सोदकं कलशं पूज्य गन्धपुष्पाक्षतैर्युतम् ।। २०

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले चास्य स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः ।। २१

कुक्षौ तु सागराः सर्वे *कलशस्य (शाम्बु) समाश्रिताः ।
आयन्तु शिवपूजार्थं दुरितक्षयकारकाः ।। २२

एवं कलशमभ्यर्च्य पश्चाच्छङ्खं समर्चयेत् ।
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।। २३

पूजितस्सर्वदेवैश्च पाञ्चजन्य नमोऽस्तुते ।
ततः शङ्खस्थतोयं तु समन्तात् परितः क्षिपेत् ।। २४

गङ्गे च यमुने चेति कलशस्य जलं स्पृशेत् ।
पीठपूजां ततः कुर्याद्गुरुं गणपतिं तथा ।। २५

दक्षवामे तथाधारशक्तिं च प्रकृतिं पराम् ।
अनन्तं पृथिवीं चैव कैलासं रत्नमण्टपम् ।। २६

कल्पवृक्षं रत्नवरसिंह्मासनमनुत्तमम् ।
श्वेतच्छत्रं चामरं च प्रागादिक्रमयोगतः ।। २७

धर्मज्ञानादिवैराग्यैश्वर्यं च प्राक्समर्चयेत् ।
अधर्मं च तथाऽज्ञानमवैराग्यमनैश्वरम् ।। २८

दक्षिणे पूजयेदेतान् सत्यं चैव रजस्तमः ।
मायां विद्यां च वह्निं च अर्कसौमौ तथैव च ।। २९

---

* सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः । अङ्गैश्च साहिताः सर्वे .......... सर्वे समुद्राः सरितः तीर्थानि च नदा ह्रदा। आयान्तु .........

आत्मानं च ज्ञानपद्मे प्रागादिदलके यजेत् ।
वामां ज्येष्ठां तथा रौद्रीं कालीं कलविकारिणीम् ।। ३०

बलां बलप्रमाथां च सर्वभूतदमन्यकाम् ।
मनोन्मनीं तथैवान्त्यां पूजयेत्साक्षतादिभिः ।। ३१

आवाह्य क्षणिके लिङ्गे पार्थिवे धातुजेऽथवा ।
वाणवर्जं रसेन्द्रे वा स्फाटिके रत्नजेषु वा ।। ३२

साक्षतं च सपुष्पं तु गृह्य स्वहृदयान्तरे ।
ध्यायेदेवं विरूपाक्षं निमील्याक्षीणि सत्तम ।। ३३

वन्दे महेशं सुरसिद्धसेवितं
सुरद्रुमैः पूजित पादपद्मम् ।
विद्याप्रदं भक्तजनैश्च सेवितं
ध्यायेत्सदा साम्बशिवं प्रसन्नम् ।। ३४

सर्वाधारे धरे देवि पूजार्थं शङ्करस्य हि ।
स्थानं देहि महादेवि पूजिता भव मे सदा ।। ३५

इत्यक्षताभिः सम्पूज्य घण्टामाताडयेत्ततः ।
आगमार्थं तु देवस्य गमनार्थं तु रक्षसाम् ।। ३६

घण्टानादं करोम्यद्य तेन प्रीतो भवेच्छिवः ।
लिङ्गं पीठे च संस्थाप्य देव्या सह ततो यजेत् ।। ३७

सपुष्पं साक्षतं गृह्य प्रार्थयेत महेश्वरम् ।
आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः ।। ३८

आराधयामि शक्त्या त्वं गृहाण परमेश्वर ।
आत्वावहं त्वनीशान्ते सोदकेनाभिषेचयेत् ।। ३९

मधुपर्कं ततो दद्यात् मूलेनैव तदा मुने ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।। ४०

घृतं मिमिक्षेति घृतं मधुवातेतिवै मधु ।
स्वादः पवस्वेति सितां नारिकेलजलं तथा ।। ४१

रम्भापानस आम्रादिजम्बीरैक्षुरसैरपि ।
षडक्षरेण संस्नाप्य गन्धरत्नसुमाम्बुभिः ।। ४२

अभिषिच्य ततो न्यस्य अन्धसस्पतयेत्यपि ।
कुर्वीतान्नाभिषेकान्तं तन्निर्वर्त्य सुशीतलैः ।। ४३

धारापात्रगताम्भोभिरविच्छिन्नाम्बुधारया ।
गोशृङ्गैरपि वा सम्यग्रुद्रावृत्त्याऽभिषेचयेत् ।। ४४

एकवारं त्रिवारं वा तथैकादशिनीमपि ।
संस्नाप्यासाद्य पीठे च वासश्चैवोपवीतकम् ।। ४५

दद्यात् त्रियम्बकेनैव भूतिं गन्धाक्षतांस्तथा ।
उत्तानैरुत्तराग्रैश्च बिल्वैः संक्षालितैर्यजेत् ।। ४६

मालाभिः कुसुमैश्चैव शताष्टोत्तरनामभिः ।
भवायेति तथैवाष्टौ निधनेत्यादिभिस्तथा ।। ४७

धूपं दीपं च नैवेद्यं ताम्बूलं च विशेषतः ।
देवीपार्श्वे यजेच्छम्भोः वामे दक्षेऽथवा मुने ।। ४८

देवीमन्त्रेणाभिषिच्य गन्धधूपादिवाससा ।
पूजयेल्लिङ्गपार्श्वे तु स्कन्दं च गणपं तथा ।। ४९

नीराजयेत्ततो लिङ्गे देवीं स्कन्दविनायकौ ।
कांस्यवादित्रनिनदैर्घोषयेच्छिवमन्दिरम् ।। ५०

प्रदक्षिणात्रयं कृत्वा नमस्कारादिपञ्चकम् ।
षडक्षरेण मन्त्रेण कुर्वीत मुनिसत्तम ।। ५१

छत्रं च चामरे दिव्ये व्यजनादर्शकं ततः ।
नृत्तं गीतं तथा वाद्यं प्रदद्यान्मूलमन्त्रतः ।। ५२

स्तोत्रमेतत् पठेद्विद्वान् वेदत्रयगतं द्विज ।
नमो नाथात्मने तुभ्यं नमो बिन्दुकलात्मने ।। ५३

अलिङ्गलिङ्गरूपाय रूपातीताय ते नमः ।
त्वं माता सर्वलोकानां त्वमेव जगतां पिता ।। ५४

त्वं भ्राता त्वं सुहन्मित्रं त्वमेव प्रपितामहः ।
नमः सद्याय देवाय नमस्तत्पुरुषाय च ।। ५५

अघोराय नमस्तेऽस्तु वामदेवाय ते नमः ।
ईशानाय नमस्तेऽस्तु देवदेवाय ते नमः ।। ५६

शर्वाय क्षितिरूपाय शुद्धमात्राय ते नमः ।
नमः पशूनां पतये पावकायामितौजसे ।। ५७

भीमाय वाक्स्वरूपाय शब्दरूपाय ते नमः ।
महादेवाय सोमाय अमृताय नमो नमः । ५८

उग्राय यजमानाय नमोऽस्त्वाकाशमूर्तये ।
त्वदष्टमूर्तिभिर्व्याप्तं जगत्सर्वं चराचरम् ।। ५९

मया ह्यज्ञानतः शम्भो यत्कृतं पूजनं तव ।
तत्क्षमस्व महादेव शरणागतवत्सल ।। ६०

इति स्तुत्वा जपेन्मन्त्रं षडक्षरमतन्द्रितः ।
न्यासं दिङ्मोचनं कृत्वा शङ्खतोयं भ्रमेत च ।। ६१

तेनैव प्रोक्षयेद्देहं निर्माल्याम्बु पिबेत् त्रिधा ।
एक कालं द्विकालं वा त्रिकालं वा यथा बलम् ।। ६२

अष्टम्यां सोमवारेषु प्रदोषे दोषवर्जिते ।
चतुर्दश्यां तथा नक्तं नित्यनैमित्तिकेऽपि च ।। ६३

ग्रहणे विषुवे चैव पूजेयं कथिता तव ।
नास्ति शम्भोः पूजनेन सदृशं कर्म पावनम् ।। ६४

पूजया भोगमोक्षौ च सिध्यतः किं बहूक्तितः ।

**स्कन्द उवाच -**

उत्तुङ्गमातङ्गतुरङ्गपङ्क्तिः
स्यात्तुङ्गलिङ्गार्चकगेहनिष्ठा ।
धनं च धान्यं वरवस्त्ररत्न-
भोगांश्च लब्ध्वेह विमुक्तिमन्ते ।।

।। इति श्रीशिवरहस्ये दशमांशे षट्चत्वारिंशोऽध्यायः ।।



## ।। सप्तचत्वारिंशोऽध्यायः ।।

स्कन्द उवाच -

जैगीषव्य शृणुष्वाद्य संवादं परमेशयोः ।
कदाचिद्विहसन्ती सा पप्रच्छ शिवशङ्करम् ।। १

देव्युवाच -

देव देव महादेव करुणाकर शङ्कर ।
वेदान्तैर्निर्गुणो देवः कथितस्त्वं महेश्वर ।। २

त्वल्लिङ्गं निर्गुणं साक्षात्पूजितं मुक्तिदायकम् ।
अमूर्तस्यापि मूर्तत्वं कथं देव महेश्वर ।। ३

स्कन्द उवाच -

इति देव्या तया पृष्टस्तुष्टो देव उवाच ताम् ।
रहस्यं गोपनीयं ते नाख्येयं यस्य कस्यचित् ।। ४

शिव उवाच -

शृणुष्व गिरिजे धन्यं मूर्तीनामुद्भवं मम ।
अमूर्तस्यापि मे लोकहेतवे मूर्तयः कृताः ।। ५

लिङ्गं मे निर्गुणं साक्षात् परमानन्ददायकम् ।
सद्योजातोद्भवाः पञ्च पञ्च तत्पुरुषोद्भवाः ।। ६

अघोरसम्भवाः पञ्च वामदेवभवाः शिवे ।
ईशानसम्भवाः पञ्च तेषां नामानि मे शृणु ।। ७

महालिङ्गोद्भवं(:)श्रीमान् दक्षिणामूर्ति मी(री)श्वरि ।
एकपादं(दः)सुखसीनं(नः) विघ्नेशानुग्रहे रतम्(:) ।। ८

सदोभवा मूर्तयो मी(मूः) तत्पूरुषभवाः शृणु ।
सोमास्कन्दो वृषारूढः पुरत्रयविदारणः ।। ९

चण्डेश्वरानुग्रहदकामघ्नः कालदारणः ।
अघोरसम्भो देवि कालदारणतः प्रिये ।। १०

गजसंहरणो वीरभद्रो भिक्षाटनेश्वरः ।
किरातरूपी कङ्कालः कल्याणाकृतिसुन्दरः ।। ११

वामदेवभवाः पञ्च मूर्तयोऽमी(मूः)गिरीन्द्रजे ।
विष्णुचक्रप्रदाता च देवः कान्तार्धविग्रहः ।। १२

गौरीसहायो वैकुण्ठनेत्रार्च्यश्चन्द्रशेखरः ।
ईशानवक्त्रसम्भूता मूर्तयोऽमी(मूः) ममैव हि ।। १३

जलन्धरान्तको नाट्यकोविदः कालभैरवः ।
शरभो विधिगोविन्दजनको नागभूषणः ।। १४

अन्धकारिर्विरूपाक्षो विराड्रूपो दिगम्बरः ।
कैलासनाथः कल्पान्तरुद्रः कर्पूरसुन्दरः ।। १५

कालाग्निरुद्रः शूलासिधरो व्याघ्राजिनाम्बरः ।
पञ्चवक्त्रो वृद्धविप्ररूपी च मुनिरूपधृक् ।। १६

षोडशाब्दाकृतिः साक्षादघोराग्निनिवारणः ।
ज्वरार्तिशमनो विष्णुवल्लभो भक्तवत्सलः ।। १७

विधिमस्तकसंहर्ता पार्वतीप्रणयात्मकः ।
गङ्गाधरश्चन्द्रधरो मृगहस्तश्चतुर्भुजः ।। १८

भूतेश्वरः कोटिरुद्रमूर्तिःशक्तिलसत्करः ।
पञ्चब्रह्मोद्भवाः सर्वे कामदाः शान्तविग्रहाः ।। १९

एवं ध्यायन्ति ये मूर्तीः तेषां ज्ञानं भवेच्छिवे ।
तेभ्यो विशिष्टा देवेशि तिस्रः स्युर्मूर्तयो मम ।। २०

ज्ञानदा दक्षिणामूर्तिः सच्चिद्रूपा निरामया ।
मुनीनां ज्ञानदात्री च मूर्तिः सोपनिषच्छ्रुता ।। २१

कैवल्यश्रुतिबोध्या श्रीमूर्तिर्मम महेश्वरि ।
उमासहाया त्र्यक्षा च नीलकण्ठा विमुक्तिदा ।। २२

श्रीरुद्रकथिता चेयं सभापतिरिति स्थिरा ।
आसां(सु)मूर्तिषु चोत्कृष्टा कैवल्यश्रुतिदर्शिता ।। २३

मूर्तिः परतरा शम्भोरमूर्तस्याप्यसङ्गिनः ।
कल्पयन्ति कथा जोषं स्वाधिकारानुरूपतः ।। २४

ध्यायेत ज्ञानमित्याघाः श्रुतयो ध्यानकर्मणि ।
प्रवृत्तास्ता महादेवि ध्यानमीशे विमुक्तिदम् ।। २५

विष्णुब्रह्मेन्द्ररुद्राणां जननीया परा शिवा ।
सैवोमा प्रोच्यते वे दैस्तया युक्तो महेश्वरः ।। २६

असङ्गोऽपि परानन्दसच्चिद्धर्मसुखोऽद्वयः ।
माया सा प्रकृतिर्ज्ञेया ऊस मायी परमेश्वरः ।। २७

तस्यावयवभूतं यज्जगदेतत्प्रकाशते ।
नैव(नेह) नानास्ति भूतेभ्योऽप्यतिरिक्तं जगन्मुने ।। २८

तपसैव मनोज्ञेयं निष्क्रियं शान्तमव्ययम् ।
अगन्धरसरूपादिस्पर्शं यत्तन्मनोऽतिगम् ।। २९

ध्यानध्येयादिरहितं निष्कलं तत्तुरीयकम् ।
मनोधर्मोध्यानविधिस्तन्मनोऽतिममं मुने ।। ३०

तत्तस्मात्सकलं शम्भुं निष्कलं सम्प्रपूजयेत् ।
हृदाकाशे भासमानं नीवारांशकणाकृति ।। ३१

ज्वलन्तमनिशं वह्निं तच्छिखायां महेश्वरम् ।
आकाशे निर्मले शुद्धे भासमानं सुशीतलम् ।। ३२

सोममण्डलमापूर्णमचलं दृष्टिगोचरम् ।
ध्यात्वा मध्ये महादेवमुमया सहितं शिवम् ।। ३३

शुद्धस्फटिकसङ्काशं चन्द्ररेखावतंसकम् ।
त्रिलोचनं चतुर्बाहुं नीलग्रीवं परात्परम् ।। ३४

ध्यायेन्नित्यं धारणाया घटिकापञ्चकं मुने ।
आदित्यमण्डले वापि सोऽहमित्यपि सत्तम ।। ३५

हिरण्मयश्मश्रुकेशं हिरण्मयनखं शिवम् ।
हिरण्यबाहुं वरदमम्बिकापतिमीश्वरम् ।। ३६

ध्यायेन्नित्यं सदाभ्यस्य सोऽहमस्मीति भावयन् ।
स्थानेष्वेतेषु विप्रेन्द्र ध्यायेत परमेश्वरम् ।। ३७

श्रीपर्वतं शिरःस्थानं केदारं तु ललाटकम् ।
वाराणसी भ्रुवेर्मध्ये विज्ञेया ध्यानकर्मणि ।। ३८

कुरुक्षेत्रं कण्ठमेतत्प्रयागं कुचमुच्यते ।
चिदम्बरं तु हृन्मध्यमाधारः कमलालयः ।। ३९

एषु स्थानवरेष्वीशं भावयेद्देहगेषु च ।
हृदये नृत्यमानं (?)मां निध्यायेत त्वया सह ।। ४०

आत्मतीर्थानिरतो भौतिकं तीर्थमुत्सृजेत् ।
अत्यल्पोऽपि यथा वह्निः शुष्कमार्द्रं च नाशयेत् ।। ४१

ध्यानाभ्यासस्तथाल्पोऽपि महत्पापं व्यपोहति ।।

**ईश उवाच -**

ध्यानमेतदगजे विमुक्तिदं
चन्द्रचूडचरणस्य केवलम् ।
यस्य तस्य हृदये वसतीश-
स्तस्य मुक्तिमहमेव दिशामि ।।

।। इति श्रीशिवरहस्ये दशमांशे पञ्चविंशतिमूर्तिकथनं नाम सप्तचत्वारिंशोऽध्यायः ।।



## ।। अष्टचत्वारिंशोऽध्यायः ।।

**शिव उवाच -**

पूजाकोटिप्रदं ध्यानं कथयामि निबोधमे ।
निर्वाते निर्भये शुद्धे सर्वालङ्कारशोभिते ।। १

गन्धपुष्पामोदवरे मृदुतूलोपरिस्थितः ।
ध्यायेतैवं महादेवि महाकैलासवासिनम् ।। २

भस्मत्रिपुण्ड्ररुद्राक्षमालालङ्कृतविग्रहः ।
पञ्चाक्षरवरास्योऽथ निमील्याक्षियुगं शिवे ।। ३

धारणाभिः समाहृत्य योगेनाप्लाव्य वै तनुम् ।
सर्वतश्चित्तमाकृष्य हृदयाम्भोजमध्यमे ।। ४

प्राणायामैर्विकसिते परमेश्वरमन्दिरे ।
अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते ।। ५

ज्ञाननाले महाकन्दे प्रणवेन प्रबोधिते ।
मध्ये हृदयपाथोजे महादेवासनोचिते ।। ६

महिताकारशोभाढ्यं मण्डलं परिचिन्तयेत् ।
अतिचिन्तामणिप्रख्यैरतिकौस्तुभकान्तिभिः ।। ७

रत्नैरप्राकृतैर्लोकं रञ्जयन्तं समन्ततः ।
दक्षिणद्वारपार्श्वेऽस्य संस्मरेन्नन्दिकेश्वरम् ।। ८

अनेकरुद्रप्रथमभूतसङ्घैर्निषेवितम् ।
शिवधर्ममहाध्यक्षशिवान्तःपुरपालकम् ।। ९

चामीकराचलप्रख्यं सर्वाभरणभूषितम् ।
बालेन्दमकुटं सौम्यं चतुर्बाहुं त्रिलोचनम् ।। १०

दीप्तशूलं मृगं टङ्कं स्वर्णवेत्रधरं प्रभुम् ।
चन्द्रबिम्बाभवदनं फालपुण्ड्रं जटाधरम् ।। ११

उत्तरद्वारपार्श्वे तु तत्पत्नीं मरुतां सुताम् ।
सुयशां (?) सुव्रतामम्बांपादमण्डनतत्पराम् ।। १२

सहितां रुद्रकन्याभिः सखीभिश्चाप्यनेकशः ।
मध्येऽथ मण्टपस्यास्य वेदिकां विद्रुमप्रभाम् ।। १३

चतुः स्तम्भयुतां ध्यायेत् त्रिपुरश्रीमनोरमाम् ।
तस्यां शक्त्यादि सेसेव्यं तन्वि तत्परमासनम् ।। १४

आधारशक्तिं श्यामाङ्गीं करैर्धृतवराभयाम् ।
तस्याः पुरस्तादाकण्ठमनन्तं कुण्डलावृतम् ।। १५

तस्योपरि शुभं ध्यायेत्सिह्मासनमुमापतेः ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च तदङ्घ्रयः ।। १६

आग्नेयादि स्थिताश्चैते पीतरक्तहरित्प्रभाः ।
सिह्माकाराः सिह्मकोट्या प्रत्येकं परिवारिताः ।। १७

अधर्मादीनि पूर्वादिदिशासु च समन्ततः ।
राजासनं विभोर्ध्यायेत्कूर्माकृत्यनलप्रभम् ।। १८

अस्याधश्छन्दनं पद्ममासनं विपुलं स्मरेत् ।
शिवधर्ममहाकन्दं शिवज्ञानैकनालकम् ।। १९

---

छन्दनं - pleasing - charming.

अष्टैश्वर्यदलोपेतं पूर्वादिक्रमयोगतः ।
अष्टवामादिशक्त्यङ्गरुद्रकल्पितकेसरम् ।। २०

वैराग्यकर्णिकान्तस्थं वामादिनवबीजकम् ।
वामाज्येष्ठा तथा रौद्री कालीविकरिणी तथा ।। २१

बलपूर्वा विकरिणी बलप्रमथनी तथा ।
अष्टावेताः सर्वभूतदमनी नवमी परा ।। २२

केसरेषु स्थिता ध्येया रक्तभा धृतचामराः ।
कलाधरकलाद्योतत्कर्णिकायां मनोन्मनी ।। २३

स्मर्तव्येशानदिग्भागे पाशाङ्कुश वराभयाः ।
पद्मासनस्थितं ध्यायेद्देवस्य विमलासनम् ।। २४

गणाम्बिकां महादेवीं ततो गौरीं प्रचोदयात् (?) ।
क्रान्तं शक्तिभिरन्याभिः सौम्याभिर्विमलासनम् ।। २५

तस्योपरि गुणानां च मण्डलानां च साधकः ।
तस्मिन् सदाशिवं ध्यायेद्बद्धपद्मासनस्थितम् ।। २६

शुद्धस्फटिकसङ्काशं प्रसन्नं शान्तविग्रहम् ।
विद्युल्लतालवद्योतिजटामकुटधारिणम् ।। २७

शार्दूलचर्मवसनं मन्दस्मितमुखाम्बुजम् ।
रक्तपद्मदलप्रख्यपाणिपादतलं हरम् ।। २८

द्वात्रिंशल्लक्षणोपेतं सर्वाभरणभूषितम् ।
दिव्यगन्धानुलिप्ताङ्गं [1]दिव्यमालैरलङ्कृतम् ।। २९

पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनम् ।
दक्षिणे शूलवज्रासिपरश्वभयमुद्रिकम् ।। ३०

वामे च दधतं नागं पाशं घण्टां तथाङ्कुशम् ।
अस्योर्ध्वविलसद्बालसुधांशुमकुटोज्ज्वलम् ।। ३१

ध्यानस्थमूर्ध्वाभिमुखं गगनछाययासितम् ।
पूर्ववक्त्रं महेन्द्रस्य छायया कनकप्रभम् ।। ३२

बालेन्दुमकुटं सौम्यं सम्प्राप्तनवयौवनम् ।
दक्षिणं वदनं कालछायाशक्त्याञ्जनप्रभम् ।। ३३

भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् ।
दंष्ट्राकरालं दुर्धर्षं स्फुरिताधरपल्लवम् ।। ३४

चन्द्रापीडं चलत्केशं किञ्चिच्चलितयौवनम् ।
उत्तरं यक्षराजस्य छायया विद्रुमप्रभम् ।। ३५

ललाटतिलकोपेतं नीलालकविभूषितम् ।
सविलासं त्रिणयनं चन्द्राभरणभास्वरम् ।। ३६

इच्छाज्ञानक्रियारूपविलसल्लोचनत्रयम् ।
पश्चिमं पाशहस्तस्य छायया सदृशं [2]निभम् ।। ३७

---

1. मालशब्दस्य पुंस्त्वं चिन्त्यम् । दिव्यमालालसद्गलम् इति कथनं सङ्गतं भवेत् । अथवा दिव्यमाल्यैः अलङ्कृतम् इति ।
2. सदृशप्रभम् । मौक्तिकप्रभम् इति वा पाठः सङ्गच्छते ।

चन्द्रोत्तंसं सिताकारं धृतभस्म त्रिपुण्ड्रकम् ।
इति ध्यात्वा पुनरपि ध्यायेदेवं सदा शिवम् ।। ३८

सूर्यचन्द्राग्निनयनं नीलकण्ठं जटाधरम् ।
[1]ज्ञानचन्द्रकलाजूटमुद्यद्‌बाहुचतुष्टयम् ।। ३९

त्रैगुण्यामलसंभूतैर्दिव्यैर्दशभिरायुधैः ।
सर्वज्ञतादिसंसिद्धं हृदयादिषड्ङ्गकम् ।। ४०

पञ्चब्रह्मात्मवदनं पञ्चसादाख्यमूर्तिकम् ।
श्रीमत्पञ्चाक्षरमयं [2]प्रणवाकारशालिनम् (रूपिणम्) ।। ४१

समस्तवर्णरूपं च पञ्चब्रह्मकलामयम् ।
निवृत्तिज्ञानवैराग्य योगमोक्ष प्रतिष्ठया ।। ४२

आकण्ठं विद्यया सिद्धमाललाटं तु शान्तया ।
तदूर्ध्वं शान्त्यतीताख्यकलया परिकल्पितम् ।। ४३

एवं पञ्चकलारूपमिदं सादाशिवं पुनः (वपुः) ।
चतुर्मूर्तिश्चतुर्वर्णा प्रतिवक्त्रांशुमण्डला ।। ४४

एकवक्त्रा शशाङ्काभा प्रतिष्ठा पद्मधारिणी ।
अग्निवर्णा त्रिवदना विद्याशान्तिविशोभिता ।। ४५

कृष्णवर्णा चतुर्वक्त्रा शान्तिध्वजविराजिता ।
पाशहृत्पञ्चवदना शान्त्यतीता शशिप्रभा ।। ४६

---

1. ज्ञान चन्द्रेति - ज्ञानात्मकचन्द्रस्य कला जूटे कपर्दे जटामण्डले यस्येति तम् ।
2. प्रणवाकारमीश्वरमिति वा ।

सर्वाः पद्माक्षमालाढ्याः अभयेन विराजिताः ।
चतुर्भुजास्त्रिणयनाः पीनोन्नतपयोधराः ।। ४७

आसां पञ्चाध्वगर्भान्ता पदाध्वान्ता सदाशिवः । ?
मन्त्राध्वा च पदाध्वा च वर्णाध्वा पवनाध्वकः ।। ४८

तत्वाध्वा च कलाध्वा च षडध्वान इतीरिताः ।
चतुर्विंशत्पुराणानां भुवनानां शतद्वयम् ।। ४९

भुवनाध्वा च स सञ्चिन्त्यो रोमवृन्दात्मना विभोः ।
पञ्चरुद्रादिरूपैश्च वर्णैर्वर्णाध्वकल्पना ।। ५०

असौ त्वगात्मना चिन्त्यो देवदेवस्य शूलिनः ।
सप्तकोट्या महामन्त्रैर्मूलविद्यासमुद्भवैः ।। ५१

मन्त्राध्वा रुधिरात्मासौ विचिन्त्यः पार्वतीपतेः ।
अनेकभेदसम्भिन्ना मन्त्राणां पादसंहतिः ।। ५२

पादाध्वासौ पशुपतेः सिरामांसतया स्मृतम् ।
पृथिव्यादीनि षट्त्रिंशत्तत्वान्यागमवेदिभिः ।। ५३

उक्तान्यमीभिस्तत्वाध्वा शुक्लमज्जास्थिरूपभृत् ।
नास्य देहेऽस्ति रुधिरं मांसं वा नास्ति किञ्चनः ।। ५४

प्रतिबिम्बमिवाकाशे शक्रचापमिवाम्बरे ।
ज्योतिर्मयतया सिद्धमिदं सादाशिवं वपुः ।। ५५

तथापि कल्पनामात्रं कालव्याप्याध्वनामिदम् ।
ब्रह्मात्वीशानमूर्धानः पुरुषेण चतुर्मुखः (?) ।। ५६

हृदयादीन्यघोरेण गुह्यादीन्यपि वामतः ।
सद्योजातेन मन्त्रेण पादादीनि जगत्पतेः ।। ५७

पञ्चमन्त्रतनुः शम्भुरेवं कल्पनया भवेत् ।
ओङ्कारबीजप्रभवः कलापञ्चकसंयुतः ।। ५८

शुद्धस्फटिकसङ्काशः शुभमेधाविवर्धनः ।
सदाशिवात्मा व्योमस्थः ईशानः परिकीर्तितः ।। ५९

गायंत्रीप्रभवोमन्त्रः स्वर्णवर्णश्चतुष्कलः ।
*व . . . . . . गजवाहः(?) ईश्वरः पुरुषः स्मृतः ।। ६०

अर्वप्रभवो मन्त्रः कलाष्टकविभूषितः ।
अभिचारकमत्यर्थमञ्जनाद्रिसमप्रभः ?।। ६१

अशेषाघहरः पुंसामघोरो रुद्रविग्रहः ।
सामवेदभवो मन्त्रस्त्रयोदशकलान्वितः ।। ६२

वामदेवः प्रवालाभो वारितत्वास्थितो हरिः ।
यजुर्वेदोद्भवो मन्त्रः कलाष्टकयुतः स्थितः ।। ६३

शान्तिकृत्पृथिवी संस्थः सद्योजातः पितामहः ।
तत्पूर्वश्चन्दबिम्बाभः ऋग्वेदवदनोऽम्शुमान् ।। ६४

कलापञ्चदशोपेतो मुख्यमन्त्रात्मको हि सः ।
पञ्चवक्त्राः स्मृताः सर्वे दशदोर्दण्डभूषिताः ।। ६५

खड्गखेटधनुर्बाणकमण्डल्वक्षधारिणः ।
वराभयोपेतकराः शूलपङ्कजपाणयः ।। ६६

---

* मातृकायामपि अत्र विच्छेदः दृष्टः । ऊहातीतः श्लोकार्धभागः ।।

अघोरो घोर एतेषु तदन्ये सौम्यविग्रहाः ।
एवं ध्यात्वा सदेशस्य पञ्चब्रह्मात्मतां विभोः ।। ६७

तत्तद्ब्रह्मकलाभेदैर्विचिन्त्याङ्गानि कल्पयेत् ।। ६८

**स्कन्द उवाच -**

बुद्ध्याभिध्याय रुध्वा विषमविषयजागाधबाधाप्रमुग्धं
दुग्धप्रायमदिग्धसर्वविषयाकारौघदग्धाघकम् ।
ध्यायेत क्षणमेव शिक्षणचणं त्र्यक्षं महोक्षस्थितं
सर्गापारविचक्षणेक्षणमुमे विक्षीणचिन्ताक्षकः ।। ६९
वारंवारमपारसारकरूणावाराशिभाराशिहृद्
घोराशीविषयानुभूषितभवोऽप्युन्मादभावोज्झितः ।
योषार्धाकृति कामकायदहनः संमोहनो मोहिनां
हेयानामविहायिनां अगसुते भूमैकसीमा शिवः ।। ७०

।। इति श्रीशिवरहस्ये दशमांशे शिवध्यानं नाम
अष्टचत्वारिंशोऽध्यायः ।।



## ।। एकोनपञ्चाशोऽध्यायः ।।

**स्कन्द उवाच -**

ईशानः सर्वविद्यानामित्येषा शङ्खपाण्डरा ।
धूर्जटेरूर्ध्वमूर्धा सा शशिना सहिता कला ।। १

ईश्वरः सर्वभूतानामित्येषा कुन्दसन्निभा ।
शर्वस्य पूर्वमूर्धासौ शक्त्या युक्ताङ्गदाख्यया ।। २

ब्रह्माधिपतिरित्यग्रे ब्रह्मणोऽधिपतिस्तथा ।
ब्रह्मेत्येषा शशाङ्काभा शिवमूर्धास्य दक्षिणा ।। ३

शिवो मे अस्त्विति कला शुद्धस्फटिकभास्वरा ।
महेशस्योत्तरोमूर्धा मरीचिरसवीचिका ।। ४

सदाशिवोमितिकला गोक्षीरधवलाकृतिः ।
शिवस्य पश्चिमो मूर्धा ज्वालिनीमेलनोज्ज्वलः ।। ५

कला तत्पुरुषायेति पूर्वविग्रह इत्यसौ ।
शान्तियुक्ता जपावर्णा पूर्ववक्त्रं पुरद्विषः ।। ६

महादेवाय पूर्वाय धीमहीति कला श्रुता ।
सा विद्यासहिता कृष्णा दक्षिणं वक्त्रमीशितुः ।। ७

कला प्रतिष्ठासहिता तन्नो रुद्र इति श्रुता ।
वक्त्रमुत्तरमीशस्य वर्णेन स्फटिकोपमा ।। ८

प्रचोदयात् इति कला प्रतप्तकनकोपमा ।
शिवस्य पश्चिमं वक्त्रं निवृत्त्या नित्यसंहितम् ।। ९

अघोरेभ्यः कला नीला हृदयान्तमया युता ।
अथ घोरेभ्य इत्येषा रक्तामेघा सखीगणा ।। १०

पीता घोरा कला स्कन्धो दक्षिणः क्षुधया युतः ।
वामा निद्रायुता घोरतरेभ्य इति कीरभाः ।। ११

नीला मृत्युयुता नाभिः सर्वतः शर्वरूपिणी ।
कुक्षिः सर्वेभ्य इत्येषा शुभ्राभा मायया युता ।। १२

नमस्ते अस्तु रुद्रेति प्रतिष्ठा रक्तभा युता ।
वक्षो रूपेभ्य इत्येषा उत्फुल्लाम्बुजसप्रभा ।। १३

वामदेवाय इत्येषा कला सिन्दूरसुन्दरा ।
रजसा साहिता(?) मूलाधारधरात्मताम् (?) ।। १४

लिङ्गमौलियुता पीता ज्येष्ठाय नम इत्यसौ ।
सद्योरुस्थविरा नीला स्यादुद्राय नमःकला ।। १५

पीतासवाल्पवामोरुः कालाय नम इत्यसौ ।
शुक्ला कामकला कामा सा हिमाञ्जन दक्षिणा ।। १६

वामा विकरणायाथ नमः श्यामा ससंयमा ।
सक्रिया दक्षिणा जङ्घा नीला बालकला विभोः ।। १७

वामा विकरणायाथ बुद्धिसिद्धियुतारुणा ।
विद्युद्वर्णा बलकला सव्यस्फिक्कार्यया युता ।। १८

वामा प्रमथनायाथ नमोधात्रीयुता सिता ।
बलाकाभायुता सौम्या बल प्रमथनी कला ।। १९

भ्रामण्याद्भुतलावण्या कटिः कन्दर्पविद्विषः ।
सव्यपार्श्वे मनकला नीलाभा मोहिनीयुता ।। २०

उल्लसत्करपक्षाभा उन्मनाय नमः कला ।
मनोन्मनी युतं ध्यायेद्वामपार्श्वं पिनाकिनः ।। २१

सद्योजातं प्रपद्यामीत्येषा बालार्कसन्निभा ।
कला सिद्धिसमायुक्ता धूर्जटेर्दक्षिणं पदम् ।। २२

सद्योजातायवै पूर्वा नम इत्यसिता कला ।
ऋद्धिशक्तेः सहचरी वामं गौरीपतेः पदम् ।। २३

नीला भवे कलायुक्ता सहितो दक्षिणः करः (?) ।
नीला भवे कलान्यातु वामो लक्ष्मीयुतः करः ।। २४

मेधा सहचरी सीता सा पीवाप्ति भवे कला (?) ।
भवोद्भवों इति कला सा कान्तिररुणा शिरः ।। २५

नीला भवकला बाहुः दक्षिणः स्वधया युतः ।
उद्यदर्ककरा भासामुद्भवाय नमः कला ।। २६

धृतिशक्तियुतां ध्यायेद्वामबाहुं जगत्पतेः ।
अष्टत्रिंशत्कला देवास्त्रिणेत्राश्च चतुर्भुजः ।। २७

वराभयपरश्वेणविलसद्रक्तपङ्कजाः ।
न तद्ब्रह्मसमाकारवर्णायुध भृतोऽथवा ।। २८

एतेषां वामभागे तु विचिन्त्याः शक्तयस्त्विमाः ।
पाशाङ्कुशाभयवरद्योतमानकराम्बुजाः ।। २९

श्रीकण्ठप्रमुखान् रुद्रान् वर्णरूपान् सशक्तिकान् ।
प्रभोरवयवान्ध्यायेद्वायूक्तन्यायवर्त्मना ।। ३०

स्मरेत्स्वशक्तिकान् रुद्रान् अर्धनारीश्वराकृतीन् ।
सिन्दूरकाञ्चनप्रख्यवामदक्षिणपार्श्वगान् ।। ३१

पाशाङ्कुशाक्षवलयशूलमुद्राविराजितान् ।
प्रसन्नवक्त्रकमलान् विश्ववाञ्छितदायकान् ।। ३२

कामिकं पादकमलं योगजं गुल्फयोर्युगम् ।
चिन्त्यं पादाङ्गुलीरूपं कारणं प्रसृताद्वयम् ।। ३३

विनयं जठरं प्राहुर्विश्वासं हृदयात्मकम् ।
स्वायम्भुवं स्तनद्वन्द्वं अनलं लोचनत्रयम् ।। ३४

वीरागमः कण्ठदेशो रौरवं श्रवणद्वयम् ।
मकुटं मकुटं शम्भोर्बाहवो विमलागमाः ।। ३५

चन्द्रो ज्ञानं मनः शम्भोर्बिम्बं वदनपङ्कजम् ।
जिह्वा प्रोद्गीतमीशस्य ललितं गण्डयोर्युगम् ।। ३६

सिद्धं ललाटफलकं सन्तानं कुण्डलद्वयम् ।
यज्ञोपवीतं शर्वोक्तं हारस्रक् पारमेश्वरम् ।। ३७

किरणं रत्नभूषास्य वातुलं वसनात्मकम् ।
एवं तच्छाङ्करं रूपमीश्वस्य विचिन्तयेत् ।। ३८

शिवं शिवप्रदं पुंसां शिवधर्मप्रवर्तकम् ।
प्रणवस्य च मात्राभिर्वर्णैः पञ्चाक्षरस्य च ।। ३९

वदनांसो . . . युगलं कल्पयेदम्बि कापतेः ।
विशुद्धं शिवसादाख्यं विद्युद्‌बृन्दमिवाम्बरे ।। ४०

विश्वतः स्फुटितं ज्योतिः विद्यादूर्ध्वमुखं विभोः ।
अमूर्तमथ सादाख्यं मूलस्तम्भ इति श्रुतम् ।। ४१

ज्योतिःस्तम्भमयं लिङ्‌गं स्मरेदस्योत्तरं मुखम् ।
ज्योतिर्लिङ्‌गैकभोगार्थ एकवक्त्रं त्रिलोचनम् ।। ४२

मूर्तिसादाख्यमित्युक्तं ध्यायेत्पश्चिममाननम् ।
शूलं च परशुं वज्रमभूतिं दक्षिणैः करै ।। ४३

पाशं वह्निं च घण्टां च वरं वामैः करैरपि ।
दधानं कर्तृसादाख्यं चतुर्वक्त्राम्बुजोज्ज्वलम् ।। ४४

लिङ्‌गमध्ये समुद्‌भूतं संस्मरेद्दक्षिणाननम् ।
पञ्चवक्त्रं दशभुजं पीठलिङ्‌गसमुद्‌गतम् ।। ४५

प्रसिद्धं कर्म सादाख्यं पुरारेः पूर्वमाननम् ।
ब्रह्मपञ्चोर्ध्वपूर्वाशा दक्षिणोत्तरपश्चिमान् ।। ४६

वक्त्रं विभोर्ध्यायेत् ईशानप्रभृतिक्रमात् ।

सर्वज्ञता तृप्तिरनादिबोध
स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः
षडाहुरङ्‌गानि महेश्वरस्य ।। ४७

हृदयं हृदये शुभ्रं शिरः शिरसि पिङ्‌गलम् ।। ४८

शिखां शिखा धरारक्तां कवचं पार्श्वयोः स्थितम् ।
नेत्रेषु स्यामलं नेत्रकरेस्त्रमसितं (?) स्मरेत् ।। ४९

चतुर्भुजास्त्रिणेत्राश्च जटामकुटमण्डिताः ।
वराभये कपालं च शूलं च दधतं करैः ।। ५०

अङ्गदेवाः स्मृताः सौम्या नेत्रत्रास्त्रग्रविग्रहे (?) ।
त्रिशूलं त्रिगुणं प्राहुः परशुं सत्वनिष्ठितम् ।। ५१

खड्गप्रपातो वज्रं तु शम्भोः शक्तिरभेद्यता ।
वह्निःसंहारिणी शक्तिश्चक्रं नागोऽप्रधृष्यता ।। ५२

मलमाया कर्मपाशो घण्टा नादस्वरूपिणी ।
अभयं पालनीशक्तिर्विकर्णं (विकटं) चाङ्कुशं विदुः ।। ५३

एवं दशभुजाश्चिन्त्या लिङ्गैर्दशभिरायुधैः ।
जपकाले तु मन्त्रस्य ध्येयो देवश्चतुर्भुजः ।। ५४

वराभयपरश्वेणलसत्करसरोरुहः ।
वक्त्रेष्वीशानकं वक्त्रं यदूर्ध्वाभिमुखं सदा ।। ५५

पूजाकाले तु तत्पूजा द्वाराभिमुखातां व्रजेत् ।
पुरुषाघोरजाताख्य वामदेवाननानि तु ।। ५६

द्वारभेदान्न भिद्यन्ते स्वस्वस्थानव्यवस्थया ।
अथवा मण्टपे द्वारदिगादिपरितः क्रमात् ।। ५७

चत्वार्येतानि वक्त्राणि प्रादक्षिण्येन कल्पयेत् ।
एवं सदाशिवं ध्यात्वा निश्चलेनान्तरात्मना ।। ५८

मन्त्रन्यासादिकं कृत्वा स्वस्यां स्वस्यां तनौ यथा ।
मूर्तित्वेनैव सङ्कल्प्य शिवस्य परमात्मनः ।। ५९

अभ्यर्च्य गन्धपुष्पाद्यैर्मनसैवोपपादितैः ।
तस्यां मूर्तौ मूर्तिमन्तं शिवं सदसतः परम् ।। ६०

प्राणस्थानं महेशस्य चिन्तयेदम्बिकापतेः ।
ब्रह्मा विष्णुश्च रुद्रश्च तथान्ये च सुरासुराः ।। ६१

तपोभिरग्र्यैरद्यापि यस्य दर्शनकाङ्क्षिणः ।
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ।। ६२

सहभूतेन्द्रियग्रामैः प्रथमं संप्रसूयते ।
कारणानां च यो ध्याता ध्येयः परमकारणम् ।। ६३

न संप्रसूयतेऽन्यस्मात्कदाचन कुतश्चन ।
सर्वैश्वर्येण सम्पूर्णो नाम्ना सर्वेश्वरोऽस्त्ययम् ।। ६४

सर्वैर्मुमुक्षुभिः ध्येयः शम्भुराकाशमध्यगः ।
सर्वोपरि कृतावासः सर्वावासश्च शाश्वतः ।। ६५

षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतेः (?) ।
उत्तरोत्तरभूतानामुत्तरश्च निरुत्तरः ।। ६६

अनन्तमहिमाम्भोधिरपरिच्छिन्नवैभवः ।
अशेषविषयामोघशुद्धबुद्धिविजृम्भणः ।। ६७

आत्मशक्त्यमृतास्वादप्रमोदरसलालसः ।
अनन्तानन्द सन्दोहमकरन्दमधुव्रतः ।। ६८

अशेषजगदण्डानां पिण्डीकरणपण्डितः ।
औदार्यवीर्यगाम्भीर्यमाधुर्यमकरालयः ।। ६९

अतुलः सर्वभूतानां राजराजो महेश्वरः ।
अप्राकृतशरीरं तमितिमन्मथरूपिणम् ।। ७०

संरक्तपाणिचरणं कुन्दमन्दस्मिताननम् ।
शुद्धस्फटिकसङ्काशं फुल्लपद्मत्रिलोचनम् ।। ७१

चतुर्भुजमुदाराङ्गं चारुचन्द्र कलाधरम् ।
वराभयदहस्तं च मृगटङ्कधरं हरम् ।। ७२

सर्वकल्याणनिलयं चारुनीलगलान्तरम् ।
सर्वोपमानरहितं सर्वात्मानं विचिन्तयेत् ।। ७३

ततः सञ्चिन्तयेत्तस्य वामभागे महेश्वरीम् ।
प्रफुल्लोत्पलपत्राभ विस्तीर्णायतलोचनाम् ।। ७४

पूर्णचन्द्राभवदनां नीलकुञ्चितमूर्धजाम् ।
नीलोत्पलदलप्रख्यां चन्द्रार्धकृतशेखराम् ।। ७५

वसुन्धराधरोत्तुङ्गपीनोन्नपयोधराम् ।
तनुमध्यां पृथुश्रोणीं पीतसूक्ष्मोत्तराम्बराम् ।। ७६

सर्वाभरणसम्पन्नां ललाटतिलकोज्ज्वलाम् ।
विचित्रपुष्पसङ्कीर्णकेशपाशोपशोभिताम् ।। ७७

सर्वातीतगुणाकारां किञ्चिल्लज्जानताननाम् ।
काव्याकारस्फुरद्राजल्लसन्मुक्ताफलाञ्चिताम् ।। ७८

हेमारविन्द विलसद्दक्षहस्ताब्जशोभिताम् ।
दण्डवच्चापरं हस्तं दधतीं पीठसंस्थिताम् ।। ७९

पाशविच्छेदिकां साक्षात्सच्चिदानन्दरूपिणीम् ।
सदाविश्वेश्वरहरश्रीशद्रुहिणमातरम् ।। ८०

समस्तगौरीवाग्देवीलक्ष्म्यादिपरिसेविताम् ।
एवं देवं च देवीं च ध्यात्वा तरुणविग्रहौ ।। ८१

सर्वोपचारवद्भक्त्या भावपुष्पैः समर्चयेत् ।
एवं ध्यात्वा क्षणमहो अग्निष्टोमायुतं फलम् ।। ८२

उमासहायं विश्वेशं ध्यात्वा प्राप्नोति मानवः ।। ८३

**स्कन्दः उवाच**

शम्भुश्चिदाकाशगकोशकाशो
ध्येयश्चिदानन्द धनोऽव्ययात्मा ।
शाखाशिखाभिर्गदितो हराज-
मुकुन्दशक्रादिसुरप्रसूतिः ।। ८४

।। इति श्रीशिवरहस्ये दशमांशे
एकोनपञ्चाशोऽध्यायः ।।



## ।। पञ्चाशोऽध्यायः ।।

**स्कन्द उवाच -**

ध्यानमेतत्तवोक्तं यन्महादेवस्य मुक्तये ।
उमासहायं विश्वेशं ध्यात्वा मुक्तो भवेन्नरः ।। १

श्रुतिप्रकथितेयं ते मूर्तिः परतरेशितुः ।
कैवल्यश्रुतिनिर्दिष्टा साक्षान्मोक्षप्रदायिनी ।। २

ब्राह्मणक्षत्रियविशामाश्रमाणां च सर्वदा ।
सन्न्यासिभिर्विशेषेण हृदि न्यस्यैव केवला ।। ३

भस्मदीप्तत्रिपुण्ड्राङ्कैः सदारुद्राक्षधारिभिः ।
रुद्रसूक्तजपासक्तैः सदा पञ्चाक्षरादरैः ।। ४

ध्येया हृत्पङ्कजोत्फुल्लकर्णिकायां विमुक्तये ।
क्षणमेकं ऋतूनां च (क्रतूनां च)चतुःसप्ततिजं फलम् ।। ५

प्राप्नोति मनुजः सद्य इत्याह श्रुतिरेव हि ।
ध्यानमेव परापूजा नान्या पूजा महेशितुः ।। ६

ज्ञानध्यानाभियुक्तस्य शिवः शीघ्रं विमोचकः ।
भवोरुपाशबन्धेभ्यो रहस्यं ते मयोदितम् ।। ७

सर्वेषामपि पापानां ध्यानं शम्भोर्विनिष्कृतिः ।
अन्याधिकारिभेदेषु पूजा स्थानादि भेदतः ।। ८

शिवोदितोऽयं च विधिः श्रृणु ध्यायन्ति मां मुने ।
देव्यैदेवेन कथितं सर्वसंशय नाशनम् ।। ९

**ईश्वर उवाच -**

अर्केन्दु बिम्बेष्वनले च लिङ्गे
हृद्युत्तमाङ्गे मम देवि पूजनम् ।
प्रशस्तमाहुर्निगमागमाः शिवे
तत्पूजनं मे सफलं भवेत्सदा ।। १०

प्रातर्दर्शनमीश्वरस्य विपुलं नैशं विनश्येदघं
मध्याह्ने हयमेधपुण्यफलदं सायान्तने जन्महृत् ।
स्यादर्धेन्दुकलावतंसभजनं सम्पूजनं लोकनं
धन्यानां किल जायते त्रिभुवने पापौघतापौघहृत् ।। ११

अर्वागामलकात्स्वतोलधुतरं लिङ्गं न शस्तं शिवे
सर्वद्रव्यभवं हि सूक्ष्ममपि तद्रत्नोद्भवं शस्यते ।
नैतत्स्फाटिकधातुमारकतके . . . . . कोत्तुङ्गिनं(?)
लिङ्गंनैव हि दोषभागकमलं तुङ्गं हि शस्येत मे ।।

सूक्ष्मे स्फाटिकजे तथा मरतके सद्विद्रुमे कीटिते
त्रासस्त्रासकरो भवेत गिरिजे तुङ्गे न लिङ्गे त्वघम् ।
मृत्स्ना चापि चतुष्टयाङ्गुलहितं अर्वाक् ततो दोषकृत्
पाषाणप्रभवं गृहेषु निहितं हन्त्येव पुण्यं कृतम् ।। १३

धातुभ्योऽप्यधिकं सुरत्नकलितं क्लृप्तं ततः पार्थिवं
तस्मादप्ययुताधिकोत्तमफलं स्याद्बाणलिङ्गं रसम् ।
शम्भोरुत्तमवीर्यजान्नहि परं लिङ्गं तथा वै चरं
दैवं च स्थिरमार्यमानुषकृतं स्वायम्भुवं स्यात्फलम् ।। १४

पार्थप्रहाराङ्कितहेमबिन्दु-
चितं भवेन्नार्मदलिङ्गमीशे ।
त्रिपञ्चवारं तुलया न साम्यं
प्रयाति तद्बाण भवं प्रशस्तम् ।। १५

श्वेतं मुक्तिदमम्बिकेऽसितमहो पुण्याभिवृद्धिप्रदं
रक्तं नार्मदलिङ्गमप्यघहरं दारिद्र्यदं पूजनात्* ।
प्रादेशादधिकं चरार्चनविधौ नैतच्च तत्स्थावरम् ।। १६

सपीठापीठं वा भवतु गिरिजे नार्मदभवं
प्रशस्तं हस्ताभ्यां स्पृशति यदि हस्तेन भयतः ।
तथैवार्चा बिल्वैर्यदि परममुक्तिं किल लभेत्
गृहे संस्थं क्षेत्रं प्रभवति ततः क्षेत्रममजे ।। १७

चराचरे वा विपिने नगे वा
स्थितं च लिङ्गं यदि पूज्य दृष्ट्वा ।
तद्बाणलिङ्गं मम पूज्यमेव
तत्स्थावरार्चेक्षणपुण्यभाक् भवेत् । (स्यात्) १८

यद्दत्तं नियमार्चनाय गुरूणा लिङ्गं प्रपूज्यं सदा
रत्नस्फाटिक धातुबाणकलिते तल्लिङ्गभङ्गे शिवे ।
प्राणानप्यसमीक्ष्य यस्त्यजति(यो यजति)स स्याद्भक्तवर्योऽम्बिके
तस्याहं वितरामि मुक्तिमधिकां तत्तुल्यमर्चेत वा ।। १९

---

* दारिद्र्यदमित्यस्य उत्तरत्र अन्वयः । प्रादेशधिकप्रमाणकलिङ्गपूजने दारिद्र्यम् ।

ईशार्चना विरहितं यदि भक्ष्यभोज्य-
मन्नं फलं कीटक सम्मितं भवेत् ।
त्यक्त्वा नरो यस्सतु पञ्चवत्सरं
*प्रतप्तशैले निवसेत् शिवार्चनाम् ।। २०

नियमाच्छिवलिङ्गमर्चयेत्
मरणे वापि त्यजन् स एव पापी ।
यदि सन्त्यजते प्रमादतोऽर्चां
स हि कुर्याच्च उपोष्य भक्तियुक्तः ।। २१

न प्राणलिङ्गनियमः कलिजद्विजानां
शस्तः प्रशस्तमगजे किल हस्तबन्धम् ।
लिङ्गं गले च हृदये किल तान्त्रिकाणां
देवस्य धारणविधिं प्रवदन्ति वेदाः ।। २२

नायं वैदिक सम्मतो विधिरयं लिङ्गार्चने केवलं ।
भस्माक्षादि विधारणं च नियतं त्याज्यं न चैतत् द्विजैः ।।

सर्वेन्द्रियादिरहितो यदि पुत्रकृत्यं ।
तस्यार्चनं भवति शैलसुते त्रिसत्यम् ।। २४

तुङ्गं यावच्चलिङ्गं परिणतिरपि सा तावती योनिरुक्ता
शक्ता विस्तीर्ण वृत्ता भवति गिरिसुते उन्मुखी पीठतोर्ध्वा ।
पीठं चापि चतुष्कवृत्तकलितं तल्लिङ्गमानाङ्गुलं
व्यायामोच्छ्रितवृत्तमध्यरहितं न्यूनाधिकं दोषकृत् ।। २५

---

* शिवार्चनां त्यक्त्वा नरः पञ्चवत्सरपर्यन्तं प्रतप्तशैले वसेत् । शिवार्चनाया अवश्यकर्तव्यता अनेन बोध्यते ।।

नेदं मानं मनोज्ञं भवति गिरिसुते लिङ्गमाने स्वयम्भौ(?)
दैवार्षेऽपि वदन्ति मानुषविधौ तत्स्थावरे वा चरे ।
रत्नेधातुविनिर्मिते स्फटिकजे स्यान्मृत्तिकाकल्पिते
सूत्रीपञ्चकमेतदेव कथितं स्याद्भोगमोक्षप्रदम् ।। २६

न्यूनाधिकं भवति दोषकरं हि लिङ्गं
आयुः प्रजाधनपशून् प्रविनाशयेत ।
तस्मात्समाङ्गुलमिदं प्रविचार्य कुर्यात्
लिङ्गं मनोज्ञमगजे विधिरेष शुद्धः ।। २७

शम्भोर्लिङ्गे स्वयम्भौ(?) ऋषिसुरनिहिते बाणलिङ्गे चरे वा
रत्नस्फाटिक धातुसम्भवमहालिङ्गे मृदा पारदे ।
ध्यात्वा वा हृदयाम्बुजे द्विजवरश्चण्डेशनिर्माल्यभाक्
नो भूयादितरेषु वैदिकवरः तन्न स्पृशेद् दूषकम् ।। २८

एतेषामघहारि निर्मलतरं निर्माल्यमप्यद्रिजे
चण्डेशाधिकृतिर्न तत्र कलिता न ग्राह्यमेव द्विजैः
तन्त्रेष्वागमयन्त्रमन्त्रसहितं स्त्रीशूद्रसम्पूजितं
न ग्राह्यं किल चण्डभुक्तमगजे तद्वैदिकैः केवलम् ।। २९

बाणस्फाटिक धातु लिङ्ग निवहे पुण्ये रसेन्द्रोद्भवे
स्वायम्भौ (?) हृदयाब्जकोशकलिते दत्तंपुरस्ताद्धि यत् ।
नैवेद्यं च वरान्न भक्ष्य फलजं ग्राह्यं तथा वैदिकैः
अन्यत् प्रक्षाल्यमेषां फलरसगणजं त्याज्यमन्नं तथान्यत् ।।

शावे चापिसूतकेऽपि गिरिजे मल्लिङ्गसङ्गोज्झितः
दूराद्बिल्वदलं त्यजन्ति सुधियः(?) नित्यार्चना तेन हि ।
स्यादेवं नियमोऽप्यजायत शिवस्तेनैव सन्तुष्यति ।। ३१

न ग्राह्यं जलमन्नभोज्यमपि नो विप्रैः शिवार्चां विना
त्यक्त्वा चान्त्यजयोनिमेति नरके सन्धुक्षितोऽसौ स्मृतः ।
त्यक्त्वैकाहमपि प्रदोषसमये स्वं वापयित्वा शिरः
पूजां चापि विधाय तद्द्विगुणितां तत्पापमुक्तो भवेत् ।। ३२

स्त्रीशूद्रार्चनमेतदेव गिरिजे मृद् धातुलिङ्गे सदा
बिल्वाद्यैः सततं नमोऽन्तविहितैः पञ्चाक्षरैः केवलम् ।
अन्ये सङ्करजातयोऽप्यगसुते मल्लिङ्गलोकोत्सवै-
र्मद्धामादिविलोकनेन निलयं ते प्राप्नुवन्ते मम ।। ३३

चक्राङ्कग्रावसाम्यार्चनमगतनये एकपीठे स्थितं मे
तस्यैवाशुचिपूजनं किल भवेत् प्रप्तौघदं केवलम् ।
एकं मे शिवलिङ्गमेव नियतं सम्पूज्य मुक्तो भवेत्
बिल्वीकामलपल्लवैरहरहर्भस्माक्षधृक् शाम्भवः ।। ३४

भस्मत्रिपुण्ड्ररहितो मम लिङ्गपूजां
कृत्वाप्यघोरनरकं स शिवे प्रयाति ।
रुद्राक्षधारणविवर्जितसर्वकायः
तत्पूजनं मम शिवे प्रियकृन्न चैव ।। ३५

यस्तूर्ध्वपुण्ड्रकलिताधमफालदेशः
सम्पूजयन् मम वरं शिवलिङ्गमीशे ।
सोऽन्धन्तमं हि नरकं समुपैति नूनं
तत्पूजनं सुकृतमप्यकृतं सदा स्यात् ।। ३६

यज्ञादि दीक्षानियमेषु लिङ्ग-
सम्पूजनं पूर्वत एव कार्यम् ।

यावच्च तत्कालसमाप्तिमानं
चाकृष्य पूजां रचयेत लिङ्गे ।। ३७

सत्रेषु लिङ्गं च सदैव पूजये-
दुदूधूल्य देहं भसित त्रिपुण्ड्रैः ।
रुद्राक्ष वक्षो(फालो)ऽपि भवेत नित्यं
त्र्यक्षार्चनाधुक्षित पातकौधः ।। ३८

नष्टे भिन्ने श्लथेवा नगवरतनुजे त्यज्य लिङ्गं तथाप्सु
तस्यै वाकृतमाददीत नियतं सन्ध्यं तु चेत्सन्धिकृत् ।
लिङ्गे प्रोक्षणसंस्कृतिं पुनरुमे कुर्वीत सम्पूजयेत् ।। ३९

शूद्रप्रतिष्ठितशिलाशिवलिङ्गमीशे
दृष्टं यदि क्षितिसुरैः कृतपुण्यनाशः ।
तद्‌बाणलिङ्गसहितं यदि शूद्रलिङ्गं
स्यादेव पुण्यफलदं शिवदर्शनेन ।। ४०

पाषण्डशूद्रपतिताधमनीचदुष्ट-
चण्डालपुल्कसजनैः यदि वाभिमृष्टम् ।
दैवं तथार्षमनुजैश्च स्वयम्भुलिङ्गं
सम्प्रोक्षितं भवति वै स्थिरजं चरं वा ।। ४१

पत्रं त्रिणेत्रप्रियमेव बिल्व-
मपात्रमप्यद्रिसुते सुपात्रम् ।
करोति मल्लिङ्ग समर्चनासु
शुष्कं तथा पर्युषितं पवित्रम् ।। ४२

नैतत्त्याज्यमुमे वदन्ति निगमाः स्या च्छूद्रकेणाहृतं
विध्या(?)वाप्यविधानतो हृतमुमे श्रीपत्रमेव प्रियम् ।
शुष्कं पर्युषितं च कीटसहितं न त्याज्यमेवं शिवे
तत्रालब्धमहो तथान्यकुसुमं बिल्वाख्यमापातयेत् ।। ४३

रत्नस्वर्णविनिर्मितोरुकुसुमं यादृक् च संक्षालितं
पूर्वद्युः प्रतिपादितं गिरिसुते सम्यक् पुनः पूजयेत् ।
तद्वत् क्षालितमेवबिल्व मगजे सङ्क्षालितं पूजेत्
पत्रालाभविधौ शिवार्चकजनैर्निर्माल्यता नोचिता ।। ४४

प्रदोषकाले शशिखण्डचूड-
लिङ्गं विलोक्यं वृषगोविषाणयोः ।
तद्दण्डसंस्पृष्टकरो नरोवरः
स सर्वतीर्थाप्लुतविग्रहो भवेत् ।। ४५

हरिं न वीक्षेत कदाचिदीश-
प्रदोषकाले यदि दर्शकश्चेत् ।
प्रज्ञायु(?)रूपाद्विरही भवेत (?)
पुण्यस्य नाशः प्रभवेत (?) तस्य ।। ४६

मन्दप्रदोषेषु विशेषदर्शिनो
विभूतिभूषाः सहयोषवर्गाः ।
सानन्द मिन्दुशकलाभरणोत्तमाङ्ग-
लिङ्गार्चनेन ससुराश्च नयन्ति कालम् ।। ४७

ऋणत्रयापाकरणाय शस्तं
प्रदोषकालीनशिवार्चनं मे ।

तद्दुःखदारिद्र्य विनाशकं शिवे
नित्यं च नैमित्तिककामदं च ।। ४८

वारव्रते द्विजगणैश्च निषेधितेऽपि
न त्याज्य एव नगजे किल सोमवारः ।
सर्वेषु मासगणनासु विशिष्टमासो
यः श्रावणोर्जपरमोऽपि सुपुण्यभाक् स्यात् (?) ।। ४९

सोमामास्वपि नक्तभोजनरतो भक्तोऽथ मुक्तो भवेत्
युक्तो वाप्यघसञ्चयेन गिरिजे सुव्यक्तमेवोच्यते ।
सक्तश्चाप्युपवासकर्मणि सदा नो चेत् दिवान्त्यक्षणे
क्षीणाघः किल शङ्करार्चनरतो भुक्त्वैव मुक्तो भवेत् ।। ५०

कालाष्टम्यां निशीथे शतपथगदिते यामिनीनाथचूड-
ध्यानानन्देन लिङ्गार्चनविधिविधुरो मूढ एव दृढं सः ।
तस्यां पञ्चास्यलिङ्गं हृदि भुवि विहितं पूज्य बिल्वैस्तथाज्यैः
हुत्वा मां नगकन्यके शिखिमुखे सायुज्यमाप्नोति मे ।।

चतुर्दश्यां ईशे शशिरहितपक्षान्त्य दिवसे
निशीथव्यापिन्यां यदि यजति लिङ्गं मम परम् ।
प्रशस्तं हस्ताभ्यां परिदलितबिल्वच्छदवरैः
स मुक्तः पापौघैर्भजति च विमुक्तिं द्विजवरः ।। ५२

क्षीरेणैव शतापराधमगजे दध्ना सहस्रं धृतैः
साहस्रं दशकं तथैव मधुना तच्चायुतं वा सिताम् ।
दत्त्वा मल्लिङ्गमौलौ फलकुलजरसैः सर्वमीशे सहेऽहं
तस्मै तद्वितरामि भक्तिपरमानन्दं मुहुः शाम्भवम् ।। ५३

शस्तं प्राङ्मुखलिङ्गतोऽपि गिरिजे पश्चान्मुखं मोक्षदं
वायव्यां किलचण्डभागकलितं तत्प्राङ्मुखाग्नेयके ।
तस्यार्चां रचयेत प्राङ्मुखगते पश्चान्मुखे वा शिवे
तत्साम्मुख्यमपास्य घोरवदनं नैवार्चयेद्वै गृही ।। ५४

प्रदक्षिणपदं यदि क्षिपति पापसङ्क्षेपकृत्
नमन्नपि सदा क्रमेद्विमलमुक्तिमार्गं शिवे ।
लुठन् यदि पठन् मनुं मम शिवेऽविमुक्ताख्यके
स एव खलु लुण्ठको भवति नीलकण्ठालये ।। ५५

सव्यासव्यप्रक्रमो वर्णिनां वै
कर्मन्दिनामुभयं तत्प्रशस्तम् ।
साष्टाङ्गा वै प्रणतिः सा प्रशस्ता
शम्भोरेषा प्रक्रिया वै मयोक्ता ।। ५६

गृहस्थो वन्यो वा प्रकृतिरथ दाक्षिण्यमगजे
वृषं चण्डं सूत्रं पुनरपि वृषाद्यं प्रभवति ।
न शस्तं तत्त्वेकं शतमवरसाहस्रपरमं
त्रयं वा नत्वेकं यदि झटिति वा योऽञ्जलिपुरः ।। ५७

यदि शिववृषभान्तराभिगच्छेत्
द्रुतमीशेऽप्रणतो हि चण्डिकेशम् ।
बलमायुः पशवश्च पुत्रपौत्रा
विनशेयुः (नश्येयुः) त्वरया शिवे हि तस्य ।। ५८

पञ्चैर्ब्रह्मैर्गृहस्थो ममजनिमवरं त्र्यम्बकैर्ब्रह्मचारी
वन्यो धन्यं च रुद्रं जपति मनुवरं पूजयन् लिङ्गमैशम् ।

क्षत्रीचेश्वरलिङ्गपूजनविधौ नीलादिरुद्रं जपेत्
वैश्यः पावनपावमानमनुभिः पञ्चाक्षरैः पूजयेत् ।। ५९

सन्न्यासी प्रणवेन लिङ्गमगजे सम्पूजयेत्पावनै-
पुष्पैर्भूमिनिपातितैस्तरुवरात् श्रीरुद्रपञ्चाक्षरैः ।
तत् त्रैयम्बक मन्त्रितैः सुभसितैः समपूजयेन्मुक्तिभाक्
भस्माक्षादिविधारितोत्तमतनुः ज्ञानं मम प्राप्नुयात् ।। ६०

नद्यां गोष्ठे गृहे वा शिखरिशिखरके पुण्यदेशे वने वा
बिल्वस्याधः शिवाग्रे मम यदि विमलं लिङ्गमर्चन् प्रशस्तः ।
तत्त्वेकाधिकमुत्तरोत्तरगुणं प्राहुः शिवार्चा विधौ
गङ्गायां यदि लिङ्गपूजनविधिःस्यात्कोटिगुण्यः शिवे ।।

धातुभ्यो रत्नलिङ्गं किल विमलमहो पूजयेद्बाणलिङ्गे
तस्मादप्यगजे रसेन्द्रककृते स्यात्कोटिलिङ्गार्चनम् ।
पुण्यं चापि दिशेत(?) मुक्तिमपि वै नातोऽधिकं कीर्त्यते
शुद्धं चेद्यदिमुक्तिदायकमतो नोचेत्सुखायुः प्रदम् ।। ६२

सन्तप्ताधमचक्रचिह्निततनुं नेक्षेत पूजाविधौ
श्वानं वान्त्यजसूतकं च लवनिं दृष्ट्वानुतिष्ठेच्छिवे ।
स्नात्वा चेलयुतं पुनश्च भसितैरुद्धूल्य गात्रं तदा
द्वित्रं वा शतरुद्रजापनशुचिर्देवं यजेद्वै ततः ।। ६३

तद्दृष्टिदुष्टं न विशिष्टमीशे
नैवेद्यमाहुः फलपुष्पदानम् ।
किंविष्ठजन्मापि भवेत तेन
दत्त्वैव कुष्ठी प्रभवेत कष्टी ।। ६४

निर्माल्यङ्घनमुमे बलपुष्टिहानिः
तीर्थं शिवस्य न यथेष्टनियोजकं स्यात् ।
दानं च शस्तमगजे किल शाम्भवेषु
नान्यैरशैवजनिभिर्विनियोज्यमाहुः ।। ६५

शिवाभिषेकाम्बु पिबेदघघ्नं
बिन्दुत्रयं वा शिवपूजनान्ते ।
नातोऽधिकं ग्राह्यमुमे मलोदरे
स्यान्मूत्ररूपं यदि पापकृद्भवेत् ।। ६६

वन्ध्यं कुर्यान्न दिवसमुमे विन्ध्यगर्वापहन्तृ-
ध्येयं यत्तत्पदवरमहो पूज्य सम्पूर्णकामः ।
लोकानीष्टे स शिवभजनाद्भाजनं मुक्तयेऽसौ
सर्वेषां वै विधिरयमुमे गोपनीयो मयोक्तः ।। ६७

मस्तं यद्भसितत्रिपुण्ड्रकलितं विश्वेश्वरे यन्नतं
हस्तौ तौ शिवलिङ्ग पूजनरतौ शस्तौ च बिल्वार्चकौ ।
नस्तं यच्छिवपादपङ्कजलसत्पुष्पाम्बुजाघ्रेयकं
तन्नेत्रे सफले त्रिणेत्रविलाल्लिङ्गावलोके तते ।। ६८

तत्पादौ शिवलिङ्गधामगतिदौ तत्प्रक्रमेषूद्यतौ
चित्तं तच्छिवमूर्ति चिन्तनरतं वाणी शिवाख्यास्तुतौ ।
शस्तं तस्य समस्तभाग्यमगजे पापं विशस्तं भवेत् ।। ६९

धन्यास्त एव सितभस्मलसत्त्रिपुण्ड्राः
मान्यास्त एव शिवलिङ्गसमर्चका मे ।

अन्ये पुनर्भुविसुखैकपरा भवन्ति
वन्या वनीप्रभवकोलखराजतुल्याः ।। ७०

विहाय शिवपूजनं किमिति कायदुःखाधिक-
श्रमाश्रमनिषेवणैर्नियमयोगसंसेवनैः ।
[1]अपायदमिदं शिवे विमलमुक्तिसन्दर्शने
उपायमिदमेव यच्छिवकथासु सक्तं मनः ।। ७१

सुगमोऽयं विधिरेव केवलो
निगमान्तेषु नितान्तबोधितः ।
[2]अगमानाधिकपापवर्गहर्ता
भगनेत्रघ्नमुदे भवेद्धि कर्ता ।। ७१

यदा मृत्युवक्त्रोज्झितो जीवसङ्घ-
स्तदैवाशु कालास्यके संयतेत ।
तदेतस्य सम्मोचने कं च धन्यं
मदन्यं न मन्ये धराधीशकन्ये ।। ७२

आयुर्वायुविघट्टिताम्बुदपद्वर्घोत्थ(वर्धाख्य)वृक्षाग्रग-
व्यालोलाधरवक्त्रपल्लवगरल्लम्बाम्बुवम्भं गुरु ।
तस्मिन्नायुषि शाङ्गलिङ्गभजनं भूयात्तदायुः शिवे
सार्थक्यं समुपैति तद्विरहितं व्यर्थं भवेत् कष्टकृत् ।।

---

1. अपायं द्यति खण्डयति इत्यर्थेऽयं प्रयोगः ।

2. अग-पर्वत, मान- प्रमाण (पर्वतप्रमाणपापवर्गहर्ता)

यमभट विकटार्भटीरवं
निकटे श्रूयत एव तद्वहानाम् ।
वरघोटारिविषाण कोटिघृष्टाः
परिदृश्यन्त इमे कृतान्तवृक्षाः ।। ७४

बाधागाध भवद्धदन्तरगतास्तापत्रयार्काम्शुभिः
सन्तप्ता जनिनाशसंस्थितिमहादुःखाभिघातोद्यताः ।
विषयामिषभोजिनो मनुष्याः
झषजाला इव कालजालिकाहृतास्ते (?)।। ७५

कालव्यालोरुदंष्ट्रानलकुलतुलनाहीनदुःखार्दिताङ्गाः
तेऽमी मानव भेकमौढ्यगतयः स्वास्यान्तरालागतम् ।
कीटं जीवितुमेव भक्षयति सः तद्वद्विमूढा नराः
कालं चाप्यसमीक्ष्य भोगनिरतास्ते स्थावरत्वभ्रमात् ।। ७६

नित्यानित्यविवेकशून्यमतयस्तिष्ठन्ति विष्ठाशनाः ।। ७७

भवोरुविपिनावनीप्रभवमृत्युसंस्थाहृदः
तदान्त विषयावट प्रसृत कामषट्कण्टकम् ।
गदाश्च मृगसप्रभाः परिचरन्ति तस्मिञ्छिवे
जरावृक तृषाशिवा वृतमपार दुःखद्रुमैः ।। ७८

**स्कन्द उवाच -**

तदेवं विधिमाकर्ण्य शिववक्त्राद् गिरीन्द्रजा ।
तुष्टाव देवं हृष्टान्तः करणेन महेश्वरी ।। ७९

**देव्युवाच -**

वसुधाधरहारवास शम्भो
वसुधाराधिपपूज्यपाद देव ।
सुसुधाधरशेखरस्त्वमीशो-
ऽस्यसुधारोऽस्यधरामृतार्धदेहः ।। ८०

ताराकारसुहीरहारक भवत्काकोदराकारधृक्-
कर्पूराभकलेवरादि विलसन्माराङ्गभस्माक्षधृक् ।
पारावार भवोरु सागरमहावैश्वानरायाद्य ते
सारासारविचारकारण विभो पादौ भजाम्यद्य ते ।। ८१

भव भव शङ्कर हर मृड गरधर
कुरु कुरु करुणां शशिमौले ।
शिव तव वदनाम्बुजरसमधुना
मधु विधुसुरसं विधुनोति ।। ८२

**स्कन्द उवाच -**

उमापरिवृढं दृढं न हि भजन्ति मूढा जना
विमूढमतयो भृशं परिविशन्ति गाढं तमः ।
असारभवसागरे सुचिरमेव पापादरा-
श्चरन्ति विषयातुराः शिवपदार्चनावर्जिताः ।। ८३

अम्शोऽयं दशमः सदा शमधनैः सेव्योऽयमीशार्चकैः
आशापाशविहीन चारुमतिभिः संसेवनीयो विधिः ।

घोरापारविकारसागरतरिः सम्यक् श्रुतोऽयं भवेत्
चन्द्रोत्तंसकिरीटचारुभजने चित्तं प्रवृत्तं भवेत् ।। ८४

हृत्तापाद्विरही भवेत(द्वि) नियतं पापैर्विमुक्तो भवेत् ।। ८५

गोभूहिरण्य कलधौत नगप्रभोरु-
दानैरनेकजनुभिर्यदि पुण्यभाक् स्यात् ।
तस्यायमीक्षणपथे भवति प्रकाम-
मस्याम्शलेशमहिमा गदितस्तवाद्य ।।

।। इति श्रीशिवरहस्ये दशमांशे शिवगौरीसंवादो नाम पञ्चाशोऽध्यायः ।।

**।। दशमोऽम्शः समाप्तः ।।**

